**सूत्रधारः**—मारिष

**सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।**
**यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ५ ॥**

**नटः**—अतिदुर्जन इति वक्तव्यम् ।

**देव्यामपि हि वैदेह्यां सापवादो यतो जनः ।**
**रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ६ ॥**

**सूत्रधारः**—यदि पुनरियं किंवदन्ती महाराजं प्रति स्यन्देत ततः कष्टं स्यात् ।

**नटः**—सर्वथा ऋषयो देवताश्च श्रेयो[3] विधास्यन्ति । (परिक्रम्य) भो भोः क्वेदानीं महाराजः । (आकर्ण्य) एवं जनाः कथयन्ति—

**स्नेहात्सभाजयितुमेत्य दिनान्यमूनि**
**नीत्वोत्सवेन जनकोऽद्य गतो विदेहान् ।**
**देव्यास्ततो विमनसः परिसान्त्वनाय**
**धर्मासनाद्विशति वासगृहं नरेन्द्रः ॥ ७ ॥**

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

वाक्यालङ्कारे वा यथोचितं ज्ञेयाः ॥ **सर्वथा व्यवहर्तव्य** इति ॥ ५ ॥ **सर्वथा** सर्वप्रकारेण । **कुतः** कस्मात् । **साधुत्वे** शुद्धौ । 'साधु शुद्धौ रम्ये च' इति **हलायुधः** । **जनः** लोकः ॥ ५ ॥ **दुर्मति**रिति अतिदुर्मतिरिति चौत्तराः पठन्ति ॥ दुर्जनत्वं दुर्मतित्वं वा क्रियातो वर्णयति—**देव्या अपि हीति** ॥ ६ ॥ **वैदेह्याः** कृते इति शेषः । 'देव्यां वैदेह्यां' इति च पाठः । **हि** प्रसिद्धौ । अपवादे अतिदुर्जनत्वं अतिदुर्मतित्वं वा उपपादयति— **रक्ष** इति । **अग्नी**ति, पुरा युद्धकाण्डकृतायामित्यर्थः ॥ ६ ॥ **प्रतिष्ठते** प्राप्नोति इति यावत् । **एवं** वक्ष्यमाणोऽनुवाद इत्यर्थः ॥ **स्नेहात्सभाजयितु**मिति ॥ ७ ॥ **सभाजयितुं** रामं इति शेषः । **विदेहान्** देशान् । ध्वनिश्च । **धर्मासनात्** न्यायविचारसिंहासनात् **नरेन्द्रः** रामः । एतेन कथोपक्षेपपात्रप्रवेशौ सूचितौ ॥ 'स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् । प्रस्तावना वा तत्र स्यात्' इति, 'नासूचितस्य पात्रस्य प्रवेशो निर्ग-

---

१ 'रक्षोगृहे' इति **घ.** २ 'महाराजं प्रति स्पृशेत्' इति **घ**, 'महाराजं स्पृशेत्' इति **व.** ३ 'स्वस्ति करिष्यन्ति' इति **व.**

( ततः प्रविशत्युपविष्टो रामः सीता च । )

**रामः**—देवि वैदेहि, समाश्वसिहि । ते हि गुरवो न शक्नुवन्ति विहातुमस्मान् ।

**किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।**
**सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ८ ॥**

**सीता**—जाणामि अज्जउत्त जाणामि । किंदु संदावआरिणो बन्धुजणविप्पओआ होन्ति । ( क )

**रामः**—एवमेतत् । एते हि हृदयमर्मच्छिदः संसारभावा येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः ।

( प्रविश्य )

**कञ्चुकी**—रामभद्र–( इत्यर्धोक्ते साशङ्कम् ) महाराज–

**रामः**—( सस्मितम् ) आर्य ननु रामभद्र इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य । तद्यथाभ्यस्तमभिधीयताम् ।

**कञ्चुकी**—देव ऋष्यशृङ्गाश्रमादष्टावक्रः संप्राप्तः ।

**सीता**—अज्ज तदो किं विलम्बीअदि । ( ख )

---

( क ) जानामि आर्यपुत्र जानामि । किं तु संतापकारिणो बन्धुजनविप्रयोगा भवन्ति ।

( ख ) आर्य ततः किं विलम्ब्यते ।

---

मोऽपि वा' इति लक्षणात् ॥ ७ ॥ इति प्रस्तावना ॥ **किन्त्वनुष्ठाननित्यत्वमि**ति ॥ ८ ॥ **नित्यत्वं** नियमेन करणम् । **स्वातन्त्र्यं** स्वच्छन्दविहारम् । **प्रत्यवायैः** अकरणे प्रायश्चित्तैः । **गृहस्थता** गार्हस्थ्यम् । गृहपतित्वमिति यावत् । अग्निमत्तैव गृहस्थस्य मुख्यो धर्म इति भावः । तथा च 'अग्निहोत्रफला वेदाः' इति भारते । अनुष्ठानेति ध्वनिः । 'अनुष्ठितानन्तरजे'ति **भर्तृमीढ** ( प्र? )योगवत् क्षन्तव्यः ॥८॥ जानाम्यार्यपुत्र किन्तु सन्तापकारिणो भवन्ति गुरुजनविप्रयोगाः । **अय्यउत्ते**त्यत्र 'सर्वत्र लपराणां' इति रलोपः 'कगचजतदपयवानां प्रायो लोपः' इति पलोपश्च । **अज्जउत्ते**ति पाठे 'यस्य जः' इति जत्वम् । **येभ्यः** भोगेभ्यः । **सर्वान्** भोगान् ॥ **प्रविश्य** इति प्रवेशासूचनं प्रमादः ॥ **किं विलम्ब्यते ।**

---

१ 'नित्यत्वात्' इति घ.

**रामः**—त्वरितं प्रवेशय ।

( कञ्चुकी निष्क्रान्तः । )

( प्रविश्य । )

**अष्टावक्रः**—स्वस्ति वाम् ।

**रामः**—भगवन्, अभिवादये । इत आस्यताम् ।

**सीता**—भअवं णमो दे । अवि कुशलं सजामातुअस्स गुरुअणस्स अज्जाए सन्ताए अ । ( क )

**रामः**—निर्विघ्नः सोमपीथी[1] आवुत्तो[2] मे भगवानृष्यशृङ्ग आर्या च शान्ता ।

**सीता** । अह्मे वा[3] सुमरेदि । ( ख )

**अष्टावक्रः**—( उपविश्य ) अथ किम् । देवि कुलगुरुर्भगवान्वसिष्ठस्त्वामिदमाह—

**विश्वंभरा भगवती भवतीमसूत**
**राजा प्रजापतिसमो जनकः पिता ते ।**
**तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां**
**येषां कुलेषु[4] सविता च गुरुर्वयं च ॥ ९ ॥**

तत्किमन्यदाशास्महे । केवलं वीरप्रसवा भूयाः ।

---

( क ) भगवन् नमस्ते । अपि कुशलं सजामातृकस्य गुरुजनस्यार्यायाः शान्तायाश्च ।

( ख ) अस्मान् वा स्मरति ।

---

**नमस्ते** । अपि कुशलं मे सजामातृकाय **गुरुजनाय** । जामाता ऋष्यशृङ्गः । जामादुअस्सेति कथनं कवेः प्रमादः । 'पितृभ्रातृजामातृणामरः' इत्यरादेशात् जामाअरस्सेति कथनं युक्तम् । 'चतुर्थ्याः षष्ठीति' षष्ठीनिर्देशः । **'सोमपीथी** तु सोमपाः' **इत्यमरः । भगवान्** माहात्म्यवान् । 'कीर्तिमाहात्म्ययोर्भगः' इति **पदार्थमाला । आर्या च शान्तेति** ध्वनिः । **अस्मानपि स्मरति । अथ किं** अङ्गीकारे । **आह** स्मेति शेषः ॥ **विश्वम्भरा भगवतीति** ॥ ९ ॥ **वधूः** स्नुषा, **सविता** सूर्यः । **गुरुः** आदिकारणम् । **वयं च गुरव** इत्यूह्यम् ।

---

१ 'सोमपीती' इति **व–घ.** २ 'भावुको' इति **न.** ३ 'वि' इति **न–घ.** ४ 'गृहेषु' इति **व.**

**रामः**—अनुगृहीताः स्मः ।

**लौकिकानां हि साधूनामर्थं वागनुवर्तते ।**
**ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ १० ॥**

**अष्टावक्रः**—इदं च भगवत्यारुन्धत्या देवीभिः शान्तया च भूयो भूयः सन्दिष्टम् । यः कश्चिद्गर्भदोहदो भवत्यस्याः सोऽवश्यमचिरात्सम्पादयितव्य इति ।

**रामः**—क्रियते यद्येषा कथयति ।

**अष्टावक्रः**—ननान्दुः पत्या च देव्याः सन्दिष्टमृष्यशृङ्गेण—वत्से कठोरगर्भेति नानीतासि । वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः । तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्याम इति ।

**रामः**—( सहर्षलज्जास्मितम् । ) तथास्तु । भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मि ।

**अष्टावक्रः**—श्रूयताम् ।

**जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम् ।**
**युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः । ११ ।**

---

पुरोहिता इत्यर्थः । 'गुरुर्गीष्पतिपित्रादौ' **इत्यमरः** । कुलेषु वयमिति च पूजायां बहुत्वम् । भगवती प्रजापतिरिति च ध्वनिः ॥ 'ध्रुवार्थे केवलं त्रिषु' इति **नाममाला** ॥ ९ ॥ **वीरस्य पुत्रस्य प्रसवः** प्रसूतिः यस्याः । 'वीरः पुत्रः' इति **वेदनिघण्टुः** ॥ **लौकिकानां हि** इति ॥ १० ॥ **लौकिकानां** अवैदिकानाम् । **वाक्** आशीरूपा । आद्यानां मुख्यानाम् । 'ऋषयस्सत्यवचसः' इति, 'आद्यः प्रथममुख्ययोः' **इत्यमरसारस्वतौ** ॥ **अनुवर्तते** प्रतीक्षत इति **माठरः** ॥ १० ॥ **इदं** वक्ष्यमाणम् । **देवीभिः** कौसल्यादिभिरित्यर्थः । **भूयोभूयः** पुनः पुनः । 'पुनर्भृशार्थयोर्भूयः' इति **संसारावर्तः** । 'भूयोभूयो नमाम्यहम्' इति प्राञ्चः ॥ '**दौहृदं** दोहदेऽपि स्यादिच्छायां गर्भकौतुके' इति **विक्रमार्कः** । **यदि** चेदित्यर्थः । ननान्दुः रामभगिनीत्वाच्छान्तायाः । **पत्या** भर्त्रा ॥ 'ननान्दा तु स्वसा पत्युः' इत्यमरः । ननान्दुरिति यथोक्तं **तथे**त्यर्थः ॥ **जामातृयज्ञेन वय**मिति ॥ ११ ॥ **यज्ञेने**ति तृतीया । **वय**मिति मातरोऽहमरुन्धती च सर्वे वयमित्यर्थः । **बालः** कुमारः युवैवेत्यर्थः । अत एव 'कौमारहरः शचीदेव्याः' इति **नीलकण्ठः** । 'बालः कुमारे च' इति **शब्दमञ्जरी** । युवा त्वमेवासि इति च पाठः । **यत्**

---

१ 'अनुवर्तते' इति **न.**　२ 'गर्भदौहृदोदयो' इति **न.**　३ 'यदेषा' इति **क–घ.**

**रामः**—यथा समा[1]दिशति भगवान्मैत्रावरुणिः ।

स्नेहं दया च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोका[2]नां मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

**सीता**—अदो जेव्व राहवकुलधुरंधरो अज्जउत्तो । ( क )

**रामः**—कः कोऽत्र भोः । विश्राम्यतामष्टावक्रः ।

**अष्टावक्रः**—( उत्थाय परिक्रम्य च । ) अये कुमारलक्ष्मणः प्राप्तः । ( इति निष्क्रान्तः )

( प्रविश्य । )

**लक्ष्मणः**—जयति जयत्यार्यः । आर्य तेन चित्रकारेणास्मदुपदिष्टमार्यस्य चरितमस्यां [3]वीथिकायामभिलिखितम् । तत्पश्यत्वार्यः ।

**रामः**—जानासि वत्स दुर्मनायमानां देवीं विनोदयितुम् । तत्कि[4]यन्तमवधिं यावत् ।

**लक्ष्मणः**—यावदार्याया हुताशने विशुद्धिः ।

**रामः**—शान्तं पाप[5]म् । ( ससान्त्ववचनम् )

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १३ ॥

---

( क ) अत एव राघवकुलधुरंधर आर्यपुत्रः ।

---

यस्मात्कारणात् । **वः** रघूणां युष्माकम् । **स्वस्मात्** आत्मनोऽपि । **यशः** प्रजानुरञ्जनरूपम् । **परमं** शाश्वतम् । **धनं** तद्युक्तः स्याः इत्यर्थः । तथा च—'यौवनं धनसंपत्तिः प्रभुत्वम्' इति विषयत्रयं त्वयि जागर्ति । तस्मादविवेकता मास्तु, सावधानेन पथा संचरस्वेति भावः ॥ ११ ॥ 'वसिष्ठे च मैत्रावरुणिः' इति **हारावली** । अगस्त्य इति पूर्वोत्तरसन्दर्भमूढः कोऽपि बभ्राम ॥ **स्नेहं दयां** **चे**ति ॥ १२ ॥ **यदि वा** अथवा 'आहो उताहो यदिवा' इति **रत्नमाला** । **जानकीमपी**त्यादीनि वचनानि रामस्य भाव्यर्थसूचकानीति तत्र तत्र सूक्ष्मबुद्धिभिरवगन्तव्यम् ॥ १२ ॥ **अत एव राघवकुलधुरन्धरः** । राहवेत्यत्र 'अनादिनामसंयुक्तानां ख-घ-थ-ध-फभां हः' इति हत्वम् । 'श्रेष्ठौ धुर्यौ धुरन्धरौ' इति **मेदिनी** । 'आलेख्यं वीथिका चित्रपट्टिका' इति **त्रिकाण्डशेषः** । **अवधिः** अवसानम् ॥ **उत्पत्तिपरिपूताया** इति ॥ १३ ॥ **पावनान्तरैः** पवित्रतापादकवस्तुभेदैः ॥ १३ ॥ देवानां

---

१ 'यथाह भगवान्' इति **व–घ.** २ 'लोकस्य' इति **न–व–घ.** ३ 'वीथ्याम्' इति **क–न.** ४ 'कियानवधिः' इति **न.** ५ 'पापम् ( ससान्त्ववचनम् )' इत्येतन्नास्ति **व**–पुस्तके; 'शान्तं शान्तम्' इति **घ.**

देवि देवयजनसंभवे प्रसीद । एष ते जीवितावधिः प्रवादः ।

कष्टो[1] जनः कुलधनैरनुरञ्जनीय-
स्तन्नो[2] यदुक्तमशिवं[3] न हि तत्क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १४ ॥

सीता—होदु अज्जउत्त होदु । एहि । पेक्खह्म दाव दे चरिदम् । (क) (इत्युत्थाय परिक्रामति[4] ।)

लक्ष्मणः—इदं तदालेख्यम् ।

सीता—(निर्वर्ण्य ।) के एदे उवरिणिरन्तरट्ठिदा उवत्थुवन्ति विअ अज्जउत्तम् । (ख)

लक्ष्मणः—देवि, एतानि तानि सरहस्यानि जृम्भकास्त्राणि यानि भगवतः कृशाश्वात्[5]कौशिकमृषिम्[6]उपसंक्रान्तानि तेन च ताटकावधे प्रसादीकृतान्यार्यस्य ।

---

(क) भवत्वार्यपुत्र भवतु । एहि । प्रेक्षामहे तावत्ते चरितम् ।

(ख) क एते उपरिनिरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम् ।

---

यजनं यत्र । यज्ञभूमिरित्यर्थः । **जीवितं अवधौ** अवसाने यस्य यावज्जीवमित्यर्थः ॥ **कष्टो जन** इति ॥ १४ ॥ 'स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत्' **इत्यमरः** । **कुलधनैः** कुलीनैः । **नः** अस्माकम् । **यत् अशिवं** निष्ठुरम्, **उक्तं** हुताशनशुद्धिरिति भाषितम् । **तत् ते** तव **न क्षमं** न योग्यम् । तुशब्दः पादपूरणे ॥ अत्र दृष्टान्तमाह—**नैसर्गिकी** स्वभावसिद्धा ॥ १४ ॥ **आर्यपुत्र पश्यामस्ते चरितम्** । चरिदं इत्यत्र 'तो दः' इति दत्वम् । **निर्वर्ण्य** दृष्ट्वा । क इदानीमेते उपरि निरन्तरस्थिताः उपस्तुवन्तीवार्यपुत्रम् । **ठिदा** इत्यत्र '**स्थस्य ठः**' इति ठत्वम् । ' थु(त्थु)वन्तीत्यत्र 'स्तस्य थः' इति थत्वं च । **तानि** प्रसिद्धानि । **रहस्यैः** शरसन्धानमोक्षणोपसंहारादिमन्त्रैः **सहितानि जृम्भकानामस्त्राणि** । **मित्रं** सखायम् । **उपसंक्रान्तानि** प्राप्तानीति या-

---

१ 'कष्टं' इति **क**, 'क्लिष्टो' इति **न**. २ 'तन्मे' इति **च**; 'तन्मे दुरुक्तम्' इति **घ**. ३ 'अशुभं च न' इति **न**. ४ 'क्रामतः' इति **ब—घ**. ५ 'भृशाश्वात्' इति **न**. ६ 'ऋषिं विश्वस्य मित्रं विश्वामित्रम्' इति **च**.

रामः—वन्दस्व देवि दिव्यास्त्राणि ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि ।
एतान्यपश्यन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

सीता—णमो एदाणं । ( क )

रामः—[1]सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति ।

सीता—अणुग्गहीदम्हि । ( ख )

लक्ष्मणः—एष मिथिलावृत्तान्तः ।

सीता—अम्हहे दलन्तणवणीलुप्पलसामलसिणिद्धमसिणसोहमाणमंसलेण देहसोहग्गेण विम्हअत्थिमिदतादद्दीसन्तसोम्मसुन्दरसिरी अणादर[2]खंडिदसंकरसरासणो सिहण्डमुद्धमुहमण्डलो अज्जउत्तो आलिहिदो । ( ग )

( क ) नम एतेभ्यः ।

( ख ) अनुगृहीतास्मि ।

( ग ) अहो दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलेन देहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरखण्डितशंकरशरासनः शिखण्डमुग्धमुखमण्डल आर्यपुत्र आलिखितः ।

वत् । तेन विश्वामित्रेण ॥ ब्रह्मादय इति ॥१५॥ ब्रह्महिताय ब्राह्मणसौख्याय । स्वानि स्वकीयानि ॥ १५ ॥ नम एतेभ्यः । त्वत्प्रसवं त्वत्पुत्रम् । अनुगृहीतास्मि । अम्हो आश्चर्यं ॥ दलितनवनीलोत्पलश्यामलस्निग्धमसृणमांसलदेहसौभाग्येन विस्मयस्तिमितताततनगरजनदृश्यमानसोमसुन्दरश्रीः अनायासखण्डितशङ्करशरासनः शिखण्डमुग्धमण्डनः आर्यपुत्र आलिखितः । 'मसृणं स्निग्धं' इत्यमरोक्तेः स्निग्धमसृणयोरेकार्थता, तदपि अस्मद्व्याकृतविद्धसालभञ्जिकाप्रथमाङ्कोक्तप्रणयप्ररूढप्रेमादीनामिव स्निग्धमसृणयोस्तत्तद्धातुमहिम्नाऽवान्तरभेदो दयया कल्पनीयः । सर्वत्रैवमूह्यम् । मांसलं सान्द्रम् । सोमवत् श्रीः शोभा 'सोमवत्प्रियदर्शनः' इति रामायणे । अनायासेन लीलया । 'शिखण्डो बर्हचूडयोः' इत्यमरः । खण्डितेत्यत्र केचन शिवद्रोहिणः पाषण्डाः

१ 'सर्वथैतानि' इति क. २ 'खुडिद' इति घ—व; 'त्थुडिद' इति न.

लक्ष्मणः—आर्ये पश्य पश्य ।

सम्बन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

रामः—सुश्लिष्टमेतत्[1] ।

जनकानां रघूणां च संबन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥

सीता—एदे क्खु तक्कालकिदगोदाणमङ्गला चत्तारो भादरो विआहदिक्खिदा तुम्हे । अम्हो जाणामि तस्सिं जेव्व पदेसे तस्सिं जेव्व काले वत्तामि । (क)

रामः—एवम् ।

समयः स वर्तत इवैष यत्र मां
समनन्दयत्सुमुखि गौतमार्पितः ।
अयमागृहीत[2]कमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥

---

(क) एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरो विवाहदीक्षिता यूयम् । अहो जानामि तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते ।

---

परिहसन्तो दन्तान् दर्शयन्ति, तत्तुच्छम् ॥ रावणदुर्वहोऽपि शक्त्या हतो लक्ष्मणः यथा भक्ताय हनूमते लघुरभवत् तथा शिवलिङ्गप्रतिष्ठातेति ' अत्र पूर्वं महादेवः प्रसादमकरोत्प्रभुः' इत्यादिवचनेन **शिवगीतो**क्तविरजादीक्षानुग्रहेण च शिष्य-भक्तबालस्य रामस्य दयानिधिर्जगदीश्वरः खण्डनार्हविष्णुब्रह्माद्यवध्यरावणदुर्वह-शरासनोऽभूदिति प्रामाणिकाः । अत एव ' बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि' इति भगवान् **बोधायनः** । 'श्रीमतः शितिकण्ठस्य कृत्यं हि दुरतिक्रमम्' इत्युत्त**ररामायणे** च विग्रहवद्धर्मस्य रामस्यैव वाक्यं इति दिक् । **सुतरां श्लिष्टं** युक्तमित्यर्थः ॥ **जनकानां रघूणा**मिति ॥१७॥ **यत्र** संबन्धे । तथा च ' जनक देहि कन्यां गृहाण राम' इति वक्तुं कारयितुं च स्वयं स एष एव सर्व-स्वतन्त्र इति भावः ॥१७॥ एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारोऽपि भ्रातरो विवाहदीक्षिता यूयम् । **कालकृते**ति ध्वनिः । अम्हो जानामि तस्मिन्नेव काले वर्ते इति । **एवं** बाढमित्यर्थः ॥ **समयस्स वर्तत** इति ॥१८॥ **यत्र** समये । **आदराद्गृहीत**श्चासौ **कमनीयकङ्कण** इति विवेकः । अयमागृहीतेति ध्वनिः ॥

---

१ 'द्रष्टव्यमेतत्' **न–व**; 'दृष्टमेतत्' इति घ. २ '°मुद्गृहीत' इति **व–ब**.

**लक्ष्मणः**—इयमार्या । इयमप्यार्या माण्डवी । इयमपि वधूः श्रुतकीर्तिः ।

**सीता**—वच्छ इअं वि अवरा का । ( क )

**लक्ष्मणः**—( सलज्जस्मितम् । अपवार्य । ) अये ऊर्मिलां पृच्छत्यार्या । भवतु । अन्यतः [1]संचारयामि । ( प्रकाशम् ) आर्ये दृश्यतां द्रष्टव्यमेतत् । अयं च भगवान्भार्गवः ।

**सीता**—( ससंभ्रमम् ) [2]कम्पिदम्हि । ( ख )

**रामः**—ऋषे नमस्ते ।

**लक्ष्मणः**—आर्ये पश्य पश्य । अयमसावार्येण—( इत्यर्धोक्ते )

**रामः**—( साधिक्षेपम् ) अयि वत्स बहुतरं द्रष्टव्यम् । अन्यतो दर्शय ।

**सीता**—( सस्नेहबहुमानं निर्वर्ण्य । ) सुट्ठु सोहसि अज्जउत्त एदिणा विणअमाहप्पेण[3] । ( ग )

**लक्ष्मणः**—एते वयमयोध्यां प्राप्ताः ।

**रामः**—( सास्रम् ) सरामि हन्त सरामि ।

---

( क ) वत्स इयमप्यपरा का ।

( ख ) कम्पितास्मि ।

( ग ) सुष्ठु शोभसे आर्यपुत्र एतेन विनयमाहात्म्येन ।

---

१८ ॥ **आर्या** सीता । **माण्डवी** भरतपत्नी **श्रुतकीर्तिः** शत्रुघ्नपत्नी **इयमपरा का** । 'रहोऽन्येन सहोक्तौ स्यादपवार्य जनान्तिकम्' इति लक्षणात् प्रकृते अन्येन सह भाषणाभावात् कवेः प्रमादः । अथापि 'स्वमनसा सह' इति दयया समाधेयम् । 'आत्मगतं स्वगतं' इति वा पाठः साधुः । **ऊर्मिला** लक्ष्मणस्य पत्नी । **भार्गवः** जामदग्न्यः । **कम्पितास्मि** । **साधिक्षेपमिति**—स्वोत्कर्षः परानुत्कर्षश्च न श्रोतव्य इति भावः । शोभते आर्यपुत्र एतेन विनयमा-

---

१ 'सञ्चरामि' इति **घ**. २ 'भीदम्हि' इति **ब–घ**. ३ 'माहम्मेण' इति **क**.

जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥

इयमपि तदा जानकी

पतनविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै-
र्दशनमुकुलैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ॥ २० ॥

**लक्ष्मणः**—एषा मन्थरा ।

**रामः**—( सत्वरमन्यतो दर्शयन् । ) देवि वैदेहि

इङ्गुदीपादपः सोयं शृङ्गिबेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥ २१ ॥

**लक्ष्मणः**—( विहस्य । स्वगतम् । ) अये मध्यमाम्बावृत्तमन्त-रितमार्येण ।

**सीता**—अम्हो एसो जडासंजमणवुत्तन्तो । ( क )

---

( क ) अहो एष जटासंयमनवृत्तान्तः ।

---

हात्म्येन । 'पाल्यमानानां' इति पाठः साधुः ॥ **जीवत्सु तातपादेष्विति** ॥१९॥ **नः** अस्माकम् ॥ १९ ॥ **पतनविरलैरिति** ॥२०॥ मध्ये मध्ये दन्तानां **पतनेन विरलैः** गर्तसामन्तैरिति भावः । **मन्दः** स्वल्पः । **आलोकः** द्योतः यस्मिन्मुखे **ललितललितैरिति** वीप्सायां द्विरुक्तिः भृशं ललितैरित्यर्थः । **ज्योत्स्नाप्रायैः** चन्द्रिकाप्रचुरैः तद्वच्छीतलैः सुखकरैश्चेति भावः । **विभ्रमो** विलासः । **अकृत** चकार । **मधुरैः** मनोज्ञैः । **मुग्धा** सुन्दरीति **परिहासः** । मूढेत्यर्थः । 'मुग्धस्सुन्दरमूढयोः' इति **यादवः** ॥२०॥ **इङ्गुदीपादप** इति ॥२१॥ 'इङ्गुदी तापसतरुः' **इत्यमरः** । **यत्र** पादपे पादपप्रदेशे इत्यर्थः । यत्र **शृङ्गिबेरपुरे** इति केचित् । तन्न । सोऽयं पादप इति वाक्यविरोधात् । 'स्निग्धस्सुहृत्' इति **वामनः** ॥२१॥ **मध्यमाम्बा** कैकेयी । उत्तमाम्बा नेति व्यज्यते । **वृत्तं** । वृत्तान्तं इति भ्रान्तः पाठः । वृत्तान्त **इत्यमरः** । **अन्तर्हितमिति**—मातृनिन्दा मा भू-

---

१ 'नूतने दारसंग्रहे' **न.** २ 'प्रतनु' इति **व–घ–क.** ३ 'कुड्मलैः' इति **न.** ४ 'अङ्गानाम्' इति **न.** ५ 'अनुत्तरमन्यतो गत्वा' इति **व–घ.** ६ 'शृङ्गवेर' इति **व–घ–क.** ७ 'वृत्तान्तमन्तरितम्' इति **न;** 'वृत्तान्तोऽन्तरितः' इति **क.**

**लक्ष्मणः**—

पुत्रसंक्रान्तलक्ष्मीकैर्यैर्वृद्धैरिक्ष्वाकुभिर्धृतम्[1] ।
धृतं बाल्ये तदार्येण पुण्यमारण्यकैर्व्रतम्[2] ॥ २२ ॥

**सीता**—एसा पसण्णपुण्णसलिला भअवदी भाईरही ( क )

**रामः**—देवि रघुकुलदेवते नमस्ते ।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसामर्षात्[3]प्लुष्टान्[4]पितुश्च पितामहान् ।
अगणिततनूतापं[5] तप्त्वा तपांसि भगीरथो
भगवति तव स्पृष्टानद्भिश्चिरादु[6]दतीतरत् ॥ २३ ॥

सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्याना भव ।

**लक्ष्मणः**—अयमसौ भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

**रामः**—( सस्पृहमवलोकयति । )[7]

**सीता**—सुमरेदि वा एदं पदेसं अज्जउत्तो । ( ख )

---

( क ) एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ।

( ख ) स्मरति वैतं प्रदेशमार्यपुत्रः ।

---

दिति भावः । एष जटासंयमनवृत्तान्तः ॥ **पुत्रसंक्रान्तेति** ॥ २२ ॥ यद्वृद्धैरिक्ष्वाकुभिरित्यादि सन्धिसङ्कटम् । अन्तर्ज्वलन्निटिलेति प्राग्वृद्धासरेति च अस्मद्व्याख्यात**विद्धसालभञ्जिकाभारतचम्पूप्रयोगवद्वयनीयम् । बाल्ये कौमारदशायाम् । आरण्यका** वनवासिनः ॥ २२ ॥ एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ॥ **तुरगविचयव्यग्रेति** ॥२३॥ **विचये** अन्वेषणे । **कपिल एव महः** तेजः । तेन कर्त्रा । **रोषाद्धेतोः** । **प्लुष्टान्** दग्धान् । **पितुः** भगीरथजनकस्य । **प्रपितामहान्** सगरपुत्रान् । **उदतीतरत्** उत्तारयामास ॥ २३ ॥ **अरुन्धतीव** स्थिता **सा** प्रसिद्धा त्वमिति ॥ अथवा—यथा अरुन्धती तथा सा त्वमित्यर्थः । **शिवं** मङ्गलं **अनुध्यानं** अनुचिन्तनं यस्याः । 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वन-

---

१ 'कृतम्' इति **घ**. २ 'आरण्यकं व्रतम्' इति **घ–व**. ३ 'रोषात्' इति **न**. ४ 'पुरा प्रपितामहान्' इति **व–क**; 'पितुः प्रपितामहान्' इति **घ**. ५ '°तनूतापः' इति **न**; 'तनूपातं' इति **व–घ**. ६ 'उददीधरत्' इति **व–घ**; 'उदधीधरत्' इति **क**. ७ एतन्नास्ति **व–घ–**पुस्तकयोः.

**रामः**—अयि कथं विसर्यते ।

अलसललितमुग्धान्यध्वसंपातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥

**लक्ष्मणः**—एष विन्ध्याटवीमुखे विराधसंरोधः ।

**सीता**—अलं दाव एदिणा । पेक्खामि दाव अज्जउत्तसहत्थधरिदतालवन्तादवत्तनिवारिदादपं अत्तणो दक्खिणारण्णप्पवेसारम्भम् । (क)

**रामः**—

एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि ।
येष्वातिथेयपरमा यमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २५ ॥

---

(क) अलं तावदेतेन । प्रेक्षे तावदार्यपुत्रस्वहस्तधृततालवृन्तातपत्रनिवारितातपमात्मनो दक्षिणारण्यप्रवेशारम्भम् ।

---

स्पतिः' इत्यमरः ॥ स्मरति वा एनं प्रदेशमार्यपुत्रः । **अलसवलिते**ति ॥ २४ ॥ **यत्र** प्रदेशे **अध्वसंपातखेदात् अलसानि** आलस्ययुक्तानि जडानीति यावत् । स्वभावतस्तु **ललितेन** विलासेन मुग्धानि मनोज्ञानीत्यर्थः ॥ 'संपाते चातिपत्तनमतिपातोऽप्यतिक्रमः ।' इति **त्रिरूपः** । **अशिथिलपरिरम्भैः** दृढालिङ्गनैः । **संवाहनं** मर्दनम् । अन्योन्यसंघट्टनवशादिति भावः । **परिमृदिताः** क्लिष्टाश्च ताः । 'मृणालं त्रिषु' इति **विक्रमार्कः** । 'पाणौ मृणालीलता' इत्यस्मद्व्याख्यात**विद्धसालभञ्जिकायाम्** । तस्मादितरविस्मरणेऽपि नेदं विस्मर्यत इति भावः ॥ २४ ॥ **अटवीमुखे** वनपुरःप्रदेशे ॥ अलमेतेन पश्यामि तावदार्यपुत्रस्वहस्तधारिततालवृन्तातप (त्र?) निवारितातपं आत्मन अक्षिभ्यां दक्षिणारण्यपथिकत्वम् ॥ **तालवन्ते**ति कवेः प्रमादः । 'तालवृन्तेऽथ' इत्यनुशासनात् 'तालओण्डे'ति कथनस्यैव न्याय्यत्वात् । 'अच्चिहिं' इति 'द्विवचने बहुवचनं' इति बहुत्वं 'अक्खिहिं' इति च प्रमादः । 'अक्ष्यादिषु छः' इति छत्वविधानात् 'अच्छिहिं' इति साधीयान् पाठः ॥ **एतानि तानी**ति ॥ २५ ॥ **निर्झरिणीनां** गिरिनदीनाम् । **येषु तपो-**

---

१ 'सज्जात' इति **व–घ–क.** २ 'संवादः' इति **न.** ३ 'अज्जउत्तहत्थ' इति **व–घ.** ४ 'तालवेण्टा०' इति **घ;** 'तालवेण्टादवत्तं' इति **व;** 'तालवुन्तादवत्तं' इति **न.** ५ 'अत्तणो अच्चाहिदं दक्खिणारण्णपहिअत्तणम्' इति **न.** ६ 'शमिनो' इति **व–घ–क.**

**लक्ष्मणः**—अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखरकन्दरः[1] सततमभिष्यन्दमानमेघमेदुरितनीलिमा जनस्थानमध्यगो गिरिः प्रस्रवणो नाम ।

**रामः**—

स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि ।
स्मरसि सरसनीरां[2] तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ २६ ॥

किं च ।

किमपि किमपि मन्दं मन्दमासक्तियोगा-[3]
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २७ ॥

**लक्ष्मणः**—एषा पञ्चवट्यां शूर्पणखा[4] ।

**सीता**—हा अज्जउत्त एत्तिअं दे दंसणम् । (क)

**रामः**—अयि विप्रयोगत्रस्ते चित्रमेतत् ।

**सीता**—जहा तहा होदु । दुज्जणो असुहं उप्पादेइ । (ख)

(क) हा आर्यपुत्र एतावत्ते दर्शनम् ।

(ख) यथा तथा भवतु । दुर्जनोऽसुखमुत्पादयति ।

वनेषु ॥ 'क्रमादातिथ्यातिथेयातिथ्यर्थेऽत्र साधुनि ।' इत्यमरः । **यमिनः** नियमवन्तः । गृहिणः गृहस्थाः ॥ २५ ॥ **अनोकहनिवहाः** तरुसङ्घाः । तैः **निरन्तरं** सान्द्रं यथा तथा, **स्निग्धनीलानि** मसृणानि श्यामलानि च तानि **परिसरारण्यानि** तैः परिसरारण्यायां सान्द्रायां **गोदावर्यां मुखराः** यस्य पूर्वानुभवस्मरणात् चित्रे मुखरकन्दरत्वोपचारः इति बोध्यम् । **अभिष्यन्दमानाः** प्रस्रवन्तः ये **मेघाः तैर्मेदुरितः** निबिडीकृतः **नीलिमा** नैल्यं यस्य ॥ **स्मरसि सुतन्विति** ॥ २६ ॥ **लक्ष्मणेन प्रतिविहिते**त्यादिकं 'रवेर्गृहीतानुनयेन' इतिवत्समाधेयम् । **वर्तितानि** वर्तनानीत्यर्थः । द्वितीयपादादौ यमकभङ्गः । स्मरसीति द्विः पुनरुक्तं च ॥ २६ ॥ **किमपि किमपी**ति ॥ २७ ॥ **किमपि** अनिर्वाच्यं

१ 'मुखकन्दरः' इति न. २ 'सरसतीराम्' इति व–घ. ३ 'आसत्ति' इति व–घ. ४ 'एषः...शूर्पणखाविवादः' इति न.

**रामः**—हन्त वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति ।

**लक्ष्मणः**—

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
　तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
　रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ २८ ॥

**सीता**—( सास्रमात्मगतम् । ) अयि देव रहुकुलाणन्द एव्वं मम कालणादो किलन्तो[2] आसि । ( क )

**लक्ष्मणः**—( रामं निर्वर्ण्य साकूतम् । ) आर्य किमेतत् ।

---

( क ) अयि देव रघुकुलानन्द एवं मम कारणात्क्लान्त आसीः ।

---

यथा तथा, **किमपि** किञ्चित् । ईषदिति यावत् । **मन्दं मन्दं** शनैः शनैः । **आसक्तियोगात्** अभिनिवेशसङ्गतेः । **अविरलितौ** मिथो नीरन्ध्रीकृतौ **कपोलौ** यस्मिन् कर्मणि । **अक्रमेण** मदनावेशपारवश्यात्पूर्वोत्तरसम्बन्धाभावेनेत्यर्थः । **एकैकदोष्णोः** परस्परभुजयोः । **अविदिताः गतयामाः** अतिक्रान्तप्रहराः यस्याः । **रात्रिरेव व्यरंसीत्** विरराम । नतु संलापैकदेशोऽपीति भावः ॥२७॥ आर्यपुत्र एतावत्ते दर्शनम् । यथा तथा वा भवतु । दुर्जनः असुखमुत्पादयति ॥ **अथेदं रक्षोभिरिति** ॥ २८ ॥ **यथा**नन्तरं **इद**मेतत् । अथेदमितिवाक्यखण्डः । **वृत्तं** आचरितम् । 'वृत्तमाचरितातीतपद्यचारित्रवर्तुले' इति **केदारः** । **क्षालितं** निश्शेषितमपि वृत्तमित्यनुषज्यते । **शून्ये** सजातीयरहिते । **विकलकरणैः** विवशेन्द्रियैः । **आर्यस्य** रामस्य **चरितैः** प्ररुदितरूपैरित्यर्थः । अत एव **ग्रावा** शैलोऽपि रोदिति प्रतिध्वनिव्याजेनेत्यूह्यम् । इतोऽपि ...न्येताह—**वज्रस्य** कुलिशस्य । **हृदयं** गर्भः । **दलति** स्फुटति । **अपिः** संभावनायाम् । तथा च कदाचिदचलवज्रादीनां नाद्रवः(?) स्यात् । न तु तेषां दुरात्मनामासीदिति भावः । 'हृदयं हृदि गर्भे च' इति **पद्ममाला** ॥ 'हन्त रोदिति शैलोऽपि वज्रगर्भोऽपि दीर्यति । प्रकम्पतेऽपि विध्यण्डमण्डलं रोदनैस्तव ॥' इति **महानाटके** मेघनादोत्पत्तौ भगवान् **बोधायनः** ॥ २८ ॥ अम्हो दिनकरकुलनन्दनः एतावन्मम कारणात् क्लान्त आसीत् । **एतावदिति** क्रियाविशेषणम् ।

---

१ 'करुणैः' ब–घ. २ 'कलिदोसि' इति ब–घ क.

अयं तावद्बाष्पस्त्रुटित इव मुक्तामणिसरो
विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति च भराध्मातहृदयः ॥ २९ ॥

रामः—वत्स

तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः ।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां करोति ॥ ३० ॥

सीता—हद्धी हद्धी । अहं वि अदिभूमिं गदेण रणरणएण अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि । (क)

लक्ष्मणः—( स्वगतम् । ) भवत्वन्यतः क्षिपामि । ( चित्रं विलोक्य प्रकाशम् । ) अथैतन्मन्वन्तरपुराणगृध्रराजस्य तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् ।

---

( क ) हा धिक् हा धिक् । अहमप्यतिभूमिं गतेन रणरणकेनार्यपुत्रशून्यमिवात्मानं पश्यामि ।

---

**कारणात्** हेतोः । **निर्वर्ण्य** दृष्ट्वा ॥ **अयं तावद्बाष्प** इति ॥ २९ ॥ **तावत्** अलङ्कारे । **मुक्तामणीनां** मौक्तिकरूपरत्नानाम्, **सरः** एकावली । मुक्तामणीति पुनरुक्तं इति केचित् ॥ तन्न ॥ 'रत्नमणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इति **अमरसिंहे**नाभिधाना'न्मौक्तिकमणिच्छायैः' इत्यसद्व्याख्यात**विद्धसालभञ्जिकायाम्** । **धरणी**मुद्दिश्य । धरणौ इति च पाठः । धरणीतनयेति लक्ष्मणः । **निरुद्धः** आच्छादितोऽपि । 'आवेगो भयसंभ्रमः' इति **अमरमाला** । उन्नेतुं योग्यः **उन्नेयः** । **आध्मातं** पूरितं विफ( क ? )लीकृतं **हृदयं** येन ॥ २९ ॥ **तत्कालं प्रियजने**ति ॥ ३० ॥ स चासौ कालः तत्काले **प्रियजनस्य** सीतायाः **तीव्रः** तीक्ष्णः **प्रतिकृतिः** रावणसंहाररूपः प्रतीकारः । **विसोढः** मर्षितः । **विशेषेण पच्यमानः हृन्मर्मव्रणः** हृदयग्रन्थिव्रणः । 'मर्म तु ग्रन्थिदोषयोः' इति **रभसः** ॥ ३० ॥ हा धिक् हा धिक् अहमप्यतिभूमिं गतेन रणरणकेन आर्यपुत्रशून्यमिवात्मानं पश्यामि । **अतिभूमिं** आधिक्यम् । रणरणकशब्दो भीतिसंभ्रमवाचको देशीयः । थ ( ध )डकीति **महाराष्ट्राः** । 'चरित्रमपि चारित्रम्' इत्युभयरूपः ॥ हा तात निर्व्यूढस्तेऽपत्यस्नेहः ।

---

१ 'ते बाष्पौघः' इति **व–घ.** २ 'चिरमाध्मात०' इति **न.** ३ 'तनोति' **न.**

**सीता**—हा ताद णिव्वूढो दे अवच्चसिणेहो । ( क )

**रामः**—हा तात काश्यप शकुन्तराज क्व नु खलु पुनस्त्वादृशस्य महतस्तीर्थभूतस्य[1] साधोः सम्भवः ।

**लक्ष्मणः**—अयमसौ जनस्थानस्य पश्चिमतश्[2]चित्रकुञ्जवान्नाम[3] दनुकबन्धाधिष्ठितो दण्डकारण्यभागः । तदिदमृष्यमूकपर्वते[4] मतङ्गस्याश्रमपदम् । इयं च श्रमणा नाम सिद्धा[5] शबरतापसी । तदेतत्पम्पाभिधानं पद्मसरः ।

**सीता**—एत्थ किल अज्जउत्तेण विच्छिण्णामरिसधीरत्तणं पमुक्ककण्ठं रुण्णं आसि । (ख)

**रामः**—देवि रमणीयमेतत्सरः ।

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो भुवो[6] विभागाः ॥ ३१ ॥

**लक्ष्मणः**—अयमार्यो हनूमान् ।

---

( क ) हा तात निर्व्यूढस्तेऽपत्यस्नेहः ।

( ख ) अत्र किलार्यपुत्रेण विच्छिन्नामर्षधीरत्वं प्रमुक्तकण्ठं रुदितमासीत् ।

---

**निर्व्यूढः** निर्वाहं गतः प्राणपर्यन्तमिति शेषः ॥ **तीर्थभूतस्य** गुरुप्रायस्य । **जनस्थानं पश्चिमतः** जनस्थानस्य पश्चिमभागे इत्यर्थः । **शबरेषु तापसी** शबरीत्यर्थः ॥ यत्र किल आर्यपुत्रेण विच्छिन्नामर्षधैर्येण प्रमुक्तकण्ठं प्ररुदितमासीत् । धीरमित्यत्र 'ई धैर्ये' इति, 'तुर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु रः' इति च ईत्वं रत्वं च । रमणीयं इति ध्वनिः ॥ **एतस्मिन्मदकल इति** ॥ ३१ ॥ 'मल्लिका मल्लिकाक्षाः' इत्यमरः । तेषां पक्षैः **व्याधूतानि** कम्पितानि । **स्फुरन्ति** शोभमानानि **उरुदण्डानि** विपुलनालानि **पुण्डरीकानि** येषु ते । **बाष्पाम्भसां पतनोदययोरन्तराले** अवान्तरदशायामित्यर्थः । **विभागाः** प्रदेशाः ॥ ३१ ॥ **अयमार्य** इति ध्वनिः ॥ एष स चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरुकोपकारो महानुभावः । **गुरुरेव गुरुकः** स्वार्थे कः । प्रत्युद्धरणमेव **गुरुकः** विपुलः उप-

---

१ 'तीर्थस्य' व–घ–क. २ 'जनस्थानपश्चिमः' व–घ. ३ 'कुञ्जवान्नाम पर्वतो' न. ४ 'तदिदममुष्य परिसरे' न. ५ 'सिद्धशबरी' व–घ. ६ 'मया' न.

**सीता**—एसो सो चिरणिव्वूढ[1]जीवलोअपच्चुद्धरणगुरुओवआरी महानुभावो मारुती । (क)

**रामः**—

**दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्धनः ।**
**यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ३२ ॥**

**सीता**—वच्छ एसो कुसुमिदकदम्बतरुतण्डविअबंहिणो किंणामहेओ गिरी जत्थ अणुभावसोहग्गमेत्तपरिसेसधूसर[2]सिरी मुहुत्तं मुच्छन्दो तुए परुदिएण अवलम्बिदो तरुअले अज्जउत्तो आलिहिदो । (ख)

**लक्ष्मणः**—

**सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मि-**
**न्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।**
**आर्येणास्मिन्[3]**

**रामः**—

**विरम[4] विरमातःपरं न क्षमोऽस्मि**
**प्रत्यावृत्तः पुनरिव[5] स मे जानकीविप्रयोगः ॥ ३३ ॥**

---

(क) एष स चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरुकोपकारी महानुभावो मारुतिः ।

(ख) वत्स एष कुसुमितकदम्बतरुताण्डवितबर्हिणः किंनामधेयो गिरिर्यत्रानुभावसौभाग्यमात्रपरिशेषधूसरश्रीर्मुहूर्तं मूर्छंस्त्वया प्ररुदितेनावलम्बितस्तरुतल आर्यपुत्र आलिखितः ।

---

कारः यस्य सोऽयं शोभत इति शेषः ॥ **दिष्ट्या सोऽयमित्यादि** ॥३२॥ **कृतिनः** कुशलाः । कुशलानीति भुवनपक्षे ॥३२॥ वत्स एष कुसुमितकदम्बताण्डवितमयूरः किन्नामधेयो गिरिः । यत्रानुभावसौभाग्यमात्रपरिशेषधूसरश्रीः मूर्छन् त्वया प्ररुदितेनावलम्बितस्तरुतले आर्यपुत्रः आलिखितः । **कदम्बाः** नीपवृक्षाः । **मोरो** इति वक्तव्ये मऊरो इति कथनं कवेः प्रमादः । तथापि शेषस्संस्कृतादि(ति) सूत्रेण दयनीयोऽयं प्रयोगः । **प्रकृष्टं रुदितं** यस्य ॥ **सोऽयं शैल इति** ॥३३॥ **अतः** आर्येणास्मिन् इति वाक्यात् **परं** अन्यत् वक्ष्यमाणम् श्रोतुमिति शेषः । **सः** अनिर्वाच्यः । **प्रत्यावृत्तः** आगत इवेत्यर्थः । तृतीयचरणे राम इति व्यव-

---

१ 'णिव्विण्ण' **क–घ–व.** २ 'सुन्दरसिरी' **न.** ३ एतन्नास्ति **क–घ–व**–पुस्तकेषु. ४ 'वत्सैतस्माद्विरम' इति **क–घ–व.** ५ 'पुनरपि' **व–घ.**

**लक्ष्मणः**—अतः परमार्यस्य तत्रभवतां कपिराक्षसानां चासंख्यातान्युत्तरोत्तराणि कर्माश्चर्याणि । परिश्रान्ता चेयमार्या । तद्विज्ञापयामि विश्राम्यतामिति ।

**सीता**—अज्जउत्त एदिणा चित्तदंसणेण पच्चुप्पण्णदोहलाए अत्थि मए विण्णप्पं । ( क )

**रामः**—नन्वाज्ञापय ।

**सीता**—जाणे पुणोवि पसण्णगम्भीरासु वणराइसु विहरिस्सं पवित्तणिम्मलसिसिरावगाहां भअवदिं भाईरहिं ओगाहिस्सं त्ति । (ख)

**रामः**—वत्स लक्ष्मण ।

**लक्ष्मणः**—एषोऽस्मि ।

**रामः**—वत्स अचिरं संपादनीयोस्या दोहद इति संप्रत्येव गुरुभिः सन्दिष्टम् । तदस्खलितसुखसम्पातं रथमुपस्थापय ।

**सीता**—अज्जउत्त तुम्हेहिं वि आअन्दव्वं । ( ग )

**रामः**—अयि कठिनहृदये एतदपि वक्तव्यमेव ।

---

( क ) आर्यपुत्र एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया अस्ति मम विज्ञाप्यम् ।

( ख ) जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहरिष्यामि पवित्रनिर्मलशिशिरावगाहां भगवतीं भागीरथीमवगाहिष्य इति ।

( ग ) आर्यपुत्र युष्माभिरपि आगन्तव्यम् ।

---

थाने सत्यपि नाटकादौ न दोषः इत्यालङ्कारिकाणां समयः । अत एव **विक्रमचरिते**—‘ देवाकर्णय’ इति शुकवाक्यप्रस्तावान्तरे ‘तिष्ठति पतगेति’ **भट्टि**नाभिधानादिति दिक् ॥ ३३ ॥ यमार्येति ध्वनिः ॥ आर्यपुत्र एतेन प्रियदर्शनेन प्रत्युत्पन्नदौहृदायाः विज्ञाप्यं मेऽस्ति । दोहलाए इत्यत्र ‘दौहृदे ल’ इति लत्वम् ॥ जाने पुनरपि प्रसन्नगभीरासु वनराजिषु विहरिष्यामि । पवित्रनिर्मलां शिशिरावगाहां भगवतीं भागीरथीमवगाहिष्ये इति ॥ **तत्** तस्मात् । **संपातः** चक्रमज्जनादिना पार्श्वादिषु कुण्ठनमित्यर्थः । **उपस्थापय**ेति ध्वनिः ॥ आर्यपुत्र युष्माभिरप्यागन्तव्यम् । तेन हि प्रियं मे प्रियं मे । एवं भवतु । अपहृतास्मि खलु निद्रया ।

---

१ ‘विण्णावणिज्जं’ **क–न**. २ ‘सोम्म’ **क–घ–व**.

**सीता**—तेण हि पिअं मे पिअं मे । ( क )

**लक्ष्मणः**—यथाज्ञापयत्यार्यः । ( इति निष्क्रान्तः । )

**रामः**—प्रिये अत्र वातायनोपकण्ठे[1] मुहूर्तं संविष्टौ[2] भवावः ।

**सीता**—एवं होदु । ओहरिदम्हि क्खु परिस्समजणिदाए णिद्दाए । ( ख )

**रामः**—तेन हि निरन्तरमवलम्बस्व मामनुगमनाय[3] ।

**जीवयन्निव ससाध्वसश्रमस्वेदबिन्दुरधिकण्ठमर्प्यताम् ।**
**बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥ ३४ ॥**

( तथा कारयन्सानन्दम् ) **प्रिये किमेतत् ।**

**विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा**
**प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।**
**तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो**
**विकारश्चैतन्यं भ्रमयति च[4] संमीलयति च ॥ ३५ ॥**

---

( क ) तेन हि प्रियं मे प्रियं मे ।

( ख ) एवं भवतु । अपहृतास्मि खलु परिश्रमजनितया निद्रया ।

---

**अनुगमनायेति** ध्वनिः ॥ **जीवयन्निवेति** ॥ ३४ ॥ **चन्द्रमणयः** चन्द्रकान्ताः । **विभ्रमः** विलासः । **बाहुरधिकण्ठमर्प्यताम्** अन्धवदिति ध्वनिः ॥ ३४ ॥ **तथेति**—यथा सीता अधिकण्ठं बाहुमर्पयेत् । तथेत्यर्थः ॥ अथ तमेव बाहुस्पर्शं विच्छित्तिविशेषैरुल्लिखति ॥ **विनिश्चेतुं शक्य इति** ॥ ३५ ॥ विगतश्चासौ निश्चय इति व्युत्पत्तिबलाद्विनिश्चयशब्देन निश्चयभिन्नज्ञानं विवक्ष्यते । तथा च **विनिश्चेतुं** ज्ञातुं **न शक्य** इत्यर्थः । प्रथमचरणस्य मोक्ष इति भावः । अत एव सुखदुःखं वस्तु मोक्ष इति प्राञ्चः । **प्रमोहः** मूर्च्छातिशयः । **विसर्पः** व्याप्तिः । **मदो** मत्तता । 'बालोन्मत्तपिशाचवद्' इति स्मृतेः । अनेन द्वितीयचरणस्य ज्ञानाभाव इति भावः । **परि** परितः । **मूढः** स्वस्वकार्यविमुखः **इन्द्रियगणो** यस्मिन् । चेतनस्य भावः **चैतन्यं** जन्म । इदं कर्म ज्ञेयम् । 'प्राणी तु चेतनो जन्मी' इत्यमरः । भ्रमशाली संमोहशाली च करोतीत्यर्थः । भ्रमः भ्रान्तिः । 'आनन्दभ्रमयोस्संमोहः' इति **नाममाला** । उत्तरार्धे **विकारो** ज्ञानाभासा-

---

१ 'इतो वातायनावर्तके' घ–व. २ 'संविष्टा भव' न. ३ 'मामत्र शयनाय' क–घ–व. ४ 'समुन्मीलयति' इति व.

सीता—स्थिरप्पसादा तुम्हे इदो दाणिं किमवरम्[1]। (क)

रामः—

म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि।
एतानि ते[2] सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

सीता—पिअंवद एहि[3] । संविसम्ह । (इति शयनाय समन्ततो निरूपयति) (ख)

रामः—अयि[4] किमन्वेष्टव्यम् ।

आ विवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥ ३७ ॥

सीता—(निद्रां नाटयन्ती ।) अत्थि एदम् । अज्जउत्त अत्थि एदम् । (इति स्वपिति ।) (ग)

---

(क) स्थिरप्रसादा यूयमित इदानीं किमपरम् ।

(ख) प्रियंवद एहि । संविशावः ।

(ग) अस्त्येतदार्यपुत्र अस्त्येतत् ।

---

त्मक इति भावः । एवमालोच्य अनिर्वचनीयं पारवश्यमनुभवामीति पद्यस्य पर्यवसन्नोऽर्थः । अयमेव कवेर्भावः । एवमादिष्वत्रत्येषु पद्येषु स्वाज्ञानपराङ्मुखा दुर्विदग्धाः परस्परं शिखां बिभ्रतः कलहायन्ते । शिष्यमितोक्तावनसूयविशेषणाः प्रमाणम् । इति दिक् ॥ ३५ ॥ प्रसन्नो वदसीति पूजाभिप्रायेणाह—**वी(स्थि?)रेति।** स्थिरप्रसादा यूयमिति किमत्राश्चर्यम् । **अत्र** चाद्रुक्तौ । 'तूर्यधैर्यसौन्दर्यपर्यन्तेषु रः' इत्यनेन 'अच्चेरं' इति वक्तव्ये 'अच्चरिअं' इति प्रमादः ॥ **म्लानस्य जीवकुसुमस्येति** ॥ ३६ ॥ **जीवः** असुधारणम् । **विकासनानि** विकासकराणि । इति यथोचितमूह्यम् । पद्येऽस्मिन् ममेत्यध्याहारः ॥ ३६ ॥ प्रियंवद एहि संविशावः । **अपिः** संभावनायाम् ॥ **आ विवाहसमयादिति** ॥ ३७ ॥ **वने** दण्डकावने । अस्यान्त-

---

१ 'धीरप्रसादा यूयमत्रेदानीमाश्चर्यम्' न. २ 'तानि सुवचनानि सरोरुहाक्ष्याः' व. ३ 'सहस्सं' (शयिष्ये) इति व-घ. ४ 'अपि सन्देष्टव्यम्' न.

**रामः**—कथं प्रियवचना मे वक्षसि प्रसुप्तैव । ( निर्वर्ण्य । )

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि[1] परमसह्यस्तु विरहः ॥ ३८ ॥

( प्रविश्य )

**प्रतीहारी**—देव उवट्ठिदो । ( क )

**रामः**—अयि कः ।

**प्रतीहारी**—आसण्णपरिआरओ देवस्स दुम्मुहो । ( ख )

**रामः**—( स्वगतम् । ) शुद्धान्तचारी दुर्मुखः । स मया पौरजानप[2]-देष्वपसर्पः प्रहितः । ( प्रकाशम् ) आगच्छतु ।

( प्रतीहारी निष्क्रान्ता । )

( प्रविश्य । )

**दुर्मुखः**—( स्वगतम् ) हा कहं दाणिं देवीमन्तरेण ईदिसं अचिन्तणिज्जं जणाववादं देव्वस्स कहइस्सं । अहवा णिओओ क्खु मे ईदिसो मन्दभाअस्स । ( ग )

---

( क ) देव उपस्थितः ।

( ख ) आसन्नपरिचारको देवस्य दुर्मुखः ।

( ग ) हा कथमिदानीं देवीमन्तरेण ईदृशमचिन्तनीयं जनापवादं देवाय कथयिष्यामि । अथवा नियोगः खल्वीदृशो मे मन्दभाग्यस्य ।

---

तोऽन्वयः ॥३७॥ आर्यपुत्र एतदस्ति। **निर्वर्ण्य** दृष्ट्वा॥**इयं गेहे लक्ष्मी**रिति॥३८॥ अमृतरूपा अञ्जनवर्तिरिति भावः । **मसृणः** स्निग्धः । **अस्याः किं न प्रेयः** सर्वं प्रेय इत्यर्थः । **तु** किन्तु । **विरहो यदि** विरहश्चेत् । **परं** अत्यन्तम् । **असह्यः** ॥३८॥ **देव उपस्थितः** । विरह इति च पूर्वेणान्वयः । आसन्नपरिचारको देवस्य दुर्मुखः । **शुद्धान्तं** अन्तःपुरम् । **अपसर्पः** चरस्सन् ॥ हा कथमिदानीं सीतादेवीमन्तरेणेदृशमचिन्तनीयं जनापवादं देवाय कथयिष्यामि । अथवा नियोगः खलु मे मन्दभाग्यस्यैषः । हा आर्यपुत्र क्वासि । सौजन्यं

---

१ 'यदि पुनरसह्यो न' इति क–व. २ 'जांनपदानपसर्पितुं' व–क–घ.

**सीता**—( उत्स्वप्रायते । ) हा अज्जउत्त सोम्म कहिं सि । (क)

**रामः**—अये सैवेयं[1] रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्वेगं करोति । ( सस्नेहमङ्गमस्याः परामृशन् । )

अद्वैतं सुखदुःखयोरनुगतं[2] सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्स्नेहसारे[3] स्थितं
भद्रं तस्य[4] सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते[5] ॥ ३९ ॥

**दुर्मुखः**—( उपसृत्य । ) जेदु देवो । (ख)

**रामः**—ब्रूहि यदुपलब्धम् ।

---

( क ) हा आर्यपुत्र सौम्य कुत्रासि ।
( ख ) जयतु देवः ।

---

चिन्तनेति यावत् ॥ सौजन्यं वर्णयति ॥ **अद्वैतं सुखदुःखयो**रिति ॥ ३९ ॥ **यत्** सुमानुषं सौजन्यम् । **सुखदुःखयो**र्विषये । **अद्वैतं** द्वैविध्यरहितम् । एकमित्यर्थः । यच्छब्दचतुष्टयं सुमानुषपरामर्शीति बोध्यम् । **अवस्थासु** बाल्यकौमारयौवनजरासु यत् । **अनुगतं** अनुसारि । **विश्रामः** विश्रान्तिः । **यस्मिन्** सति । **जरसा** अपीति शेषः । जरयाऽपि । **रसः** प्रीतिः । शृङ्गारादिर्वा । **अहार्यः** अपरिहार्यः । **आवरणात्ययात्** सङ्कोतापगमात् । **सारे** स्थिरांशे । **यत् स्थितं तस्य सुमानुषस्ये**ति भावप्रधानो निर्देशः । सौजन्यस्येत्यर्थः । कृते इति शेषः । अत एव, 'सुभगमपराद्धं' **इत्यस्मद्व्याख्यातशाकुन्तले**। 'मलिनं प्रमादि' **इत्यस्मद्व्याख्यातविद्धसालभञ्जिकायां** च । शोभनो मानुषो जनः येन सौजन्येन । तत् सुमानुषं इति वार्थः । 'मानुषो जनमर्त्ययोः' इति **नामनिधानम् । कथमपि** प्रयासेन । **तत्** प्रसिद्धम् । **एकं** मुख्यम् । **भद्रं** कल्याणम् । **प्रार्थ्यते हि** प्रसिद्धौ ॥ तथा च मदनुरूपाया देव्याः सौजन्याय मङ्गलमाशास्यम् । मया तु दुर्मुखः पौरजानपदेषु विसृष्टः किमागत्य वक्ष्यति वेति भावः । 'विश्रामं भजतां' इति, 'विश्रामशाखिनं' इति च **कालिदासमुरारि**प्रयोगवदमुष्य कवेः विश्राम इति प्रयोगः प्रामादिक इति प्रामाणिकाः । 'प्रतिसङ्कोचयोरावरणं' इति **संसारावर्तः** ॥३९॥ जयतु देवः । **उपलब्धं** ज्ञातम् । अनुभूतं वा । उपस्तुवन्ति देवं पौरजानपदाः । यथा विस्मृता वयं महाराजं दशरथं रामदेवेनेति ॥ **जानपदाः** देशवासिनः ।

---

१ 'ममैव' घ. २ 'अनुगुणं' **व–घ–क.** ३ 'प्रेमसारे' **न.** ४ 'प्रेम' **व–घ.** ५ 'प्राप्यते' **व–घ–क.**

**दुर्मुखः**—उवत्थुवन्ति देवं पौरजाणपदा विसुमरिदा अह्मे महा¹-राअं दसरहं रामभद्देणेति । (क)

**रामः**—अर्थवाद एषः । दोषं तु मे कंचित्कथय येन स प्रति-विधीयते ।

**दुर्मुखः**—(सास्रम् ।) सुणादु देओ । (कर्णे ।) एव्वं विअ । इति । (ख)

**रामः**—अहह तीव्र²संवेगो वाग्वज्रः । ( इति मूर्च्छति । )

**दुर्मुखः**—आस्ससदु देव्वो । (ग)

**रामः**—( आश्वस्य । )

> **हा हा धिक्परगृहवासदूषणं य-**
> **द्वैदेह्याः प्रशमितमद्भुतैरुपायैः ।**
> **एतत्तत्पुनरपि दैवदुर्विपाका-**
> **दालर्कं विषमिव सर्वतः प्रसृ³तम् ॥ ४० ॥**

तत्किमत्र⁴ मन्दभाग्यः करोमि । ( विमृश्य सकरुणम् ) अथवा किम-न्यत् ।

> **सतां केनापि कार्येण लोकस्याराधनं व्रतम्⁵ ।**
> **यत्पू⁶रितं हि तातेन मां च प्राणांश्च मुञ्चता ॥ ४१ ॥**

संप्रत्येव च भगवता वसिष्ठेन सन्दिष्टम् । अपि च ।

---

( क ) उपस्तुवन्ति देवं पौरजानपदा विस्मारिता वयं महाराजं दशरथं रामभद्रेणेति ।

( ख ) शृणोतु देवः । एवमिव ।

( ग ) आश्वसितु देवः ।

---

**अर्थवादः** स्तोत्रपद्धतिः । किञ्चित्किञ्चिदिति च पाठः । **येन** कारणेन । शृणोतु देवः, एवमिव । निष्पेष इति च पाठः । आश्वसितु देवः । 'हा हेति खेदातिशये' इति **रत्नमाला** ॥ **हा हा धिक् परे**ति ॥ ४० ॥ **तदेतत् आलर्कं** रोगिश्वसम्बन्धि । ' अलर्कस्तु सरोगतः ' इत्यमरः । **प्रसृतं** व्याप्तम् ॥४०॥ **सतां केनापी**ति ॥४१॥ **तातेन** दशरथेन ॥ **सन्दिष्टमिति**—

---

१ 'महाराअदसरहस्स' **व–घ–क.** २ 'तीव्रोऽयं' **न.** ३ 'प्रसक्तम्' **न.** ४ 'किमद्य' **न.** ५ 'परम्' **न.** ६ 'तत्प्रतीतम्' **न;** 'यत्पूजितं' **व.**

यत्सावित्रैर्दीपितं भूमिपालै-
लोकश्रेष्ठैः साधु शुद्धं चरित्रम्[1]।
मत्सम्बन्धात्कश्मला किंवदन्ती
स्याच्चेदस्मिन्हन्त धिग्मामधन्यम् ॥ ४२ ॥

हा देवि देवयजनसम्भवे हा स्वजन्मानुग्रहपवित्रितवसुन्धरे हा निमिजनकनन्दिनि[2] हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि हा राममयजीविते हा महारण्यवासप्रियसखि हा तातप्रिये हा स्तोकवादिनि[3] कथमेवंविधायास्तवायमीदृशः परिणामः ।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४३ ॥

( दुर्मुखं प्रति । ) दुर्मुख ब्रूहि लक्ष्मणम् । एष ते नूतनो राजा रामः समाज्ञापयति । ( कर्णे । ) एवमेवम् । इति ।

**दुर्मुखः**—हा कहं दाणिं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्त-संताणाए[4] देईए दुज्जणवअणादो एँव्वं अणज्जं अज्झवसिदं[5] देएण । (क)

**रामः**—शान्तम्[6] । कथं दुर्जनाः पौरजानपदाः ।

---

( क ) हा कथमिदानीमग्निपरिशुद्धायै गर्भस्थितपवित्रसन्तानायै देव्यै दुर्जनवचनादेवमनार्यमध्यवसितं देवेन ।

---

'प्रजानामनुरञ्जने स्याः' इत्यष्टावक्रेण पूर्वोक्तमिति भावः ॥ ४१ ॥ **यत्सावित्रै**रिति ॥४२॥ तस्य चरित्रस्य। **सम्बन्धा**द्धेतोः। **कश्मला** तुच्छा। अस्मान् सवितृभूपालानुद्दिश्येत्यर्थः ॥ ननु अहमेव पापी न खलु सावित्राः सर्वेऽपि दूष्या इत्याह— **धिग्मामिति** ॥४२॥ 'नमो नमः शङ्करपार्वतीभ्यां' इत्यादिवत् **वसिष्ठारुन्धतीति** प्रयोगः क्षन्तव्यः। **स्तोकवादिनि** मितभाषिणि॥ **त्वया जगन्ति पुण्यानीति** ॥ ४३ ॥ **अनाथा** निराधारा । 'आधारप्रिययोर्नाथः' इति **रभसः** ॥ **नूतनः** निर्दय इति यावत् ॥४३॥ हा कथमग्निपरिशुद्धायै गर्भस्थितपवित्रसन्तानायै

---

१ 'चित्रम्' **न.** २ 'मुनिजनक' **न.** ३ 'प्रियस्तोकवादिनि' **व–घ.** ४ 'पवित्तरडुउलसंताणाए' **क–घ–व.** ५ 'इदं ववसिदं' **न.** ६ 'शान्तं पापं शान्तं पापम् । दुर्जना नाम' **न.**

इक्ष्वाकुवंशोऽभिमतः[1] प्रजानां
जातं च दैवाद्वचनीयबीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले
प्रत्येतु कस्तद्यदि[2] दूरवृत्तम् ॥ ४४ ॥

तद्गच्छ ।

**दुर्मुखः**—हा देइ । ( इति निष्क्रान्तः । ) (क)

**रामः**—हा कष्टम् । अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः ।

शैशवात्प्रभृति पोषितां प्रियैः[3]
सौहृदादपृथगाश्रयामिमाम्[4] ।
छद्मना परिददामि मृत्यवे
सौनिको[5] गृहशकुन्तिकामिव ॥ ४५ ॥

तत्किमस्पर्शनीयः पातकी देवीं दूषयामि । ( इति सीतायाः शिरः स्वैरमुन्नमय्य बाहुमाकर्षन् । )

अपूर्वकर्मचण्डालमयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ४६ ॥

( उत्थाय । ) हन्त विपर्यस्तः संप्रति जीवलोकः । अद्यावसितं[6] जीवितप्रयोजनं रामस्य। शून्यमधुना जीर्णारण्यं जगत् । असारः संसारः। कष्टप्रायं शरीरम् । अशरणोऽस्मि किं करोमि का गतिः । अथवा

---

( क ) हा देवि ।

---

देव्यै दुर्जनवचनादिदमध्यवसितं देवेन। **अध्यवसितं** निश्चितम् ॥ **इक्ष्वाकुवंश** इति ॥ ४४ ॥ **वचनीयं** दूषणम् । **प्रत्येति** विश्वसिति । **तत्** अग्निकृतं सीतार्पणमित्यर्थः । **दूरवृत्तं** लङ्काद्वीपवृत्तम् । **यदि** संभावनायाम् ॥४४॥ **शैशवादिति** ॥ ॥४५॥**प्रियैः** इष्टवस्तुभिः। **छद्मना** कैतवेन । **मृत्यवे** परित्यागरूपायेति सीतापक्षे। **सौनिकः** मृगपक्षिहिंसाशीलः॥४५॥**अस्पर्शनीयः** नीचः। **दूषयामि** अङ्गस्पर्शेनेति भावः॥ **अपूर्वकर्मेति**॥४६॥**अपूर्वं** कैरप्येवं न कृतमित्यर्थः॥४६॥**विपाकः** परिणामः ॥ **विपर्यस्तः** व्यत्यस्तः । **अवसितं** अवसानं प्राप्तम् । **शून्यं** वस्तु-

---

१ 'वंशोद्भवतः' घ. २ 'कस्तद्भवतिदूरवृत्तम्' क–घ–व. ३ 'प्रियाम्' व–न–क. ४ 'पृथगाशयां प्रियाम्' घ; 'पृथगाशयामिमाम्' व. ५ 'सौनिके' न. ६ 'पर्यवसितमद्य' क; 'पर्यवसितं जीवित०' व–घ.

**दुःखसंवेदनायैव रामे चैतन्यमाहि[1]तम् ।**
**मर्मोपघातिभिः प्राणै[2]र्वज्रकीलायितं हृदि ॥ ४७ ॥**

हा अम्ब अरुन्धति हा भगवन्तौ वसिष्ठविश्वामित्रौ हा भगवन्पावक हा देवि भूतधात्रि हा तात जनक हा तात हा मातः[3] हा प्रियसख सुग्रीव हा सौम्य हनूमन् हा परमोपकारिन् लङ्काधिपते बिभीषण हा सखि त्रिजटे परिमुषिताः स्थ परिभूताः स्थ रामहतकेन । अथवा [4]को नाम तेषामहमिदानीमाह्वाने ।

**ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।**
**मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥ ४८ ॥**

योऽहम्

**विस्रम्भादुरसि निपत्य लब्ध[5]निद्रा-**
**मुन्मुच्य प्रियगृहिणीं गृहस्य शो[6]भाम् ।**
**आतङ्कस्फुरितकठोरगर्भगुर्वी**
**क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ॥ ४९ ॥**

( सीतायाः पादौ शिरसि कृत्वा ) देवि देवि अयं पश्चिमस्ते रामशि[7]रसा पादपङ्कजस्पर्शः ( इति रोदिति । )

( नेपथ्ये )

अब्रह्मण्यमब्रह्मण्यम् ।

**रामः**—ज्ञायतां भोः किमेतत् ।

---

रहितम् । **जीर्णं** शुष्कम्। **अरण्यं** वनम् ॥ **दुःखसंवेदनायेति** ॥४७॥ **यस्मिन् संवेदनं** ज्ञानम् । **चैतन्यं** जन्म । **उपघातिभिः** प्रहारिभिः **कीलवत्** शङ्कुवत् आचरितम् । प्राणव्याजाच्छङ्कवो **हृदि** निखाता इत्यर्थः । अत एवाद्यापि मयि चैतन्यं वर्तत इति भावः ॥ ४७ ॥ भूतधात्रि-वसुधे । तात-दशरथ । जनक वैदेह । मातः कौसल्ये । अशोकवने पूर्वं शुश ( म ? ) स्वप्नकथनात्रिजटास्मरणमिति बोध्यम् । **परि**-परितश्चेत्यर्थः । 'हतको नीचः' इति **जयः** ॥ **ते हि मन्ये** इति ॥ ४८ ॥ **पाप्मना** दुरितेन ॥४८॥ **विस्रम्भादुरसीति** ॥ ४९ ॥ **विस्रम्भः** विश्वासः । **प्रिया** चासौ **गृहिणी** । ताम् । **आतङ्केन** आयासेन । **स्फुरितः** चलितः, **कठोरः** पूर्णः **गर्भः** । तेन **गुर्वी** अलघुम् ॥ 'आयासभीत्योरातङ्कः' इति **शाश्वतः** । **क्रव्याद्भ्यः** राक्षसेभ्यः । आमिषे पलं इत्यर्थः ॥४९॥ **रोदिती**त्यादिकमश्लीलं नाटकाप्रयोज्यमपि 'सर्वं च भक्ष्यं कुलं'

---

१ 'आगतम्' **न.** २ 'स्थिरैः' **व–घ.** ३ 'मातरः' **व–घ–क.** ४ 'कश्च' **व–घ.** ५ 'जातनिद्राम्' **न.** ६ 'लक्ष्मीम्' **न** ७ 'शिरसि' **न.**

( पुनर्नेपथ्ये । )

**ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।**
**लवणत्रासितः स्तोमः शरण्यं[1] त्वामुपस्थितः ॥ ५० ॥**

**रामः**—आः कथमद्यापि राक्षसत्रासः । तद्यावदस्य दुरात्मनो माधुरस्य[2] कुम्भीनसीपुत्रस्योन्मूलनाय शत्रुघ्नं प्रेषयामि । ( कतिचित्पदानि गत्वा पुनर्निवृत्य ) हा देवि कथमेवंगता भविष्यसि । भगवति वसुन्धरे सुश्लाघ्यां दुहितरमवेक्षस्व जानकीम् ।

**जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।**
**यां[3] देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ५१ ॥**

( इति रुदन्निष्क्रान्तः । )

**सीता**—हा सोम्म अज्जउत्त कहिं सि । ( सहसोत्थाय । ) हद्धी हद्धी दुस्सिविणेण विप्पलद्धा अहं[4] अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि ( विलोक्य । ) हद्धी हद्धी एआइणिं मं पसुत्तं उज्झिअ गदो अज्जउत्तो । किं दाणीं एदं । होदु से कुप्पिस्सं जइ तं पेक्खन्ती अत्तणो पहविस्सं । को एत्थ परिअणो । (क)

(क) हा सौम्य आर्यपुत्र कुत्रासि । हा धिक् हा धिक् दुःस्वप्नेन विप्रलब्धाहमार्यपुत्रशून्यमिव आत्मानं प्रेक्षे । हा धिक् हा धिक् एकाकिनीं मां प्रसुप्तामुज्झित्वा गत आर्यपुत्रः । किमिदानीमेतत् । भवतु तस्मै कोपिष्यामि यदि तं प्रेक्षमाणात्मनः प्रभविष्यामि । कोऽत्र परिजनः ।

इत्यादिवदुपेक्षणीयम् । ‘ अब्रह्मण्यमवध्योक्तौ’ इत्यमरः । **लवणः** राक्षसभेदः । मधुरायां नगर्यां निवासी तत्संबन्धी वा **माधुरः** ॥ **जनकानां रघूणा**मिति ॥ ५१ ॥ **जनकाः** जनकवंश्याः । **रघवः** रघुवंश्याः राजानः । **गोत्रस्य** वंशस्य । मङ्गलानुगुण्येन **यद्**िति नपुंसकनिर्देशः । अत एव ‘ शैत्यं हि यत्सा प्रकृतिर्जलस्य’ इति **भर्तृमीडः**। अजीजन इति अर्थात् त्वमितिसिद्धम् । अत्र यदिति यामिति च यच्छब्दद्वयमुत्तरवाक्योक्तमिति पूर्ववाक्ये तच्छब्दानियमः । अत एव, ‘आभाति यत्कृति’रिति अस्मद्व्याख्यात**भोजचम्पौ** ॥ ५१ ॥ हा आर्यपुत्र शून्यमिवात्मानं पश्यामि । **अप्पाण**मित्यत्र ‘आत्मनि पः’ इति पत्वम् । हा धिक् हा धिक् एकाकिनीं प्रसुप्तां मां समुज्झित्य गत आर्यपुत्रः । भवतु अस्मै कुप्यामि यदि तं पश्यन्ती आत्मनः प्रभविष्यामि । कोऽत्र परि-

१ ‘त्रातारम्’ **न.** २ एतन्नास्ति **व–घ–क–पुस्तकेषु.** ३ ‘ताम्’ **व–घ.** ४ ‘... अज्जउत्तं आक्कंदामि’ **व–घ–क.**

( प्रविश्य । )

**दुर्मुखः**—देइ कुमारलक्खणो विण्णवेदि सज्जो रहो । आरुहदु देई त्ति । (क)

**सीता**—इअं आरुहामि । ( उत्थाय परिक्रम्य । ) । फुरइ मे गब्भभारो सणिअं गच्छम्ह । (ख)

**दुर्मुखः**—इदो इदो देवी । (ग)

**सीता**—णमो तपोधणाणं णमो रहुउलदेअदाणं णमो अज्जउत्तचरणकमलाणं णमो सअलगुरुअणाणं । (घ)

( इति निष्क्रान्ताः सर्वे । )

**इति महाकविश्रीभवभूतिविरचित उत्तररामचरिते**
**चित्रदर्शनो नाम प्रथमोऽङ्कः ।**

---

(क) देवि कुमारलक्ष्मणो विज्ञापयति सज्जो रथः । आरोहतु देवीति ।
(ख) इयमारोहामि । स्फुरति मे गर्भभारः । शनैर्गच्छावः ।
(ग) इत इतो देवी ।
(घ) नमस्तपोधनेभ्यो नमो रघुकुलदेवताभ्यो नमो आर्यपुत्रचरणकमलेभ्यो नमः सकलगुरुजनेभ्यः ।

---

जनः । कुप्यामीत्यत्र कुप्पिस्सं इति पाठे कोपिष्यामीत्यर्थः । कुपिता भविष्यामीति यावत् ॥ देवि कुमारलक्ष्मणो विज्ञापयति । सज्जो रथः । आरोहतु देवी, इति । इयमारोहामि स्फुरति मे गर्भभारः । शनैः शनैर्गच्छामः । इत्थं पुरुषसमक्षं निस्सङ्कोचतया कथनं कवेरचातुर्यम् । अस्माकं तु निर्भाति— स्वगतं— फुरइ मे गब्भभारो । प्रकाशम्—सणिअं गच्छामो । इति पाठक्रमः कल्पनीयस्तावदत्र विशेषज्ञाः प्रमाणमिति ॥ इत इतो देवी । नमो रघुकुलदेवताभ्यः इति दिक् ॥ इति महाराजपदमहनीयतुक्काजिराजगृहामात्येन भार्गवकुलाकूपारचन्द्रचौण्डोबाळाजिपौत्रेण कौण्डिन्यगोत्रपारावारनिस्तुलकौस्तुभतिम्माजिबाळाजिदौहित्रेण काशीमहादेवतनूजेन शाकम्भरीपरमहंसचिदम्बरब्रह्मानुजेन नवरसभुवातिशायिचतुरचतुरधिकषष्टिप्रबन्धिदशभाषाभव्यकाव्याष्टपदीपदपद्यवर्णविलसदन्यूनाक्षरमालिकार्यस्तवनकवनधौरन्धरीपारीणेन गीतगाथासहस्रचतुष्टयदिव्यदेवीताटङ्कलिपिकल्पकेन दुर्जनातिनिन्द्येन सज्जनाभिनन्द्येन सुन्दरीकमलाजानिना वश्यवचःसर्वज्ञसरस्वतीनामत्रयमण्डितेन रामनवमीनिशीथजागरण एवारब्धपरिपूरिते उत्तररामचरितसंजीवनाख्यटिप्पणे प्रथमोऽङ्कः समाप्तः ॥
॥ इति घनश्यामपण्डितविरचिते व्याख्याने प्रथमोऽङ्कस्सम्पूर्णः ॥ शुभमस्तु ॥

## द्वितीयोऽङ्कः ।

( नेपथ्ये । )

स्वागतं तपोधनायाः ।

( ततः प्रविशत्यध्वगवेषा तापसी । )

**तापसी**—अये वनदेवतेयं फलकुसुमगर्भेण पल्लवार्घ्येण[1] दूरान्मामुपतिष्ठते ।

( प्रविश्य । )

**वनदेवता**—( अर्घ्यं विकीर्य[2] । )

**यथेच्छं[3] भोग्यं वो वनमिदमयं मे सुदिवसः**
**सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।**
**तरुच्छाया तोयं यदपि तपसो योग्यमशनं**
**फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥**

**तापसी**—किमत्रोच्यते ।

---

अथ द्वितीयोऽङ्कः ॥ अथ भूतं भवद्भविष्यदितिवृत्तकथोपक्षेपेण द्वितीयाङ्कार्थं क्रोडीकरिष्यन् कविः शुद्धविष्कम्भं प्रक्रममाणः, 'नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च' इति लक्षणादुपयुक्तपात्रप्रयुक्तवेशं परम्परासम्बन्धेन सूचयति—**नेपथ्ये** इति ॥ **स्वागत**मिति—वासन्तीनाम्ना वनदेवतया कृतः प्रश्न इत्यूह्यम् । वासन्तीत्वमिति कविनाऽग्रे वक्ष्यते । **तपोधनेति तापसीति** च एकमेव पात्रम् । 'तापसस्तु तपोधनः' इति **विक्रमार्कः** । **फलकुसुमानि गर्भे** मध्यभागे यस्य । सीताराम इतिवत् पल्लवयुक्तमर्घ्यं **पल्लवार्घ्यम्** तेनेत्यर्थः ॥ 'फलपल्लवपुष्पाढ्यं तापसेष्वर्घ्यमाहरेत्' इति स्मरणात् । 'त्रिष्वर्घ्यमर्घार्थे' इत्यमरः ॥ **यथेच्छाभोग्य**मिति ॥ १ ॥ यथेच्छं आसमन्ताद् भोक्तुं योग्यं **यथेच्छाभोग्यम्** । **वः** इति पूजायां बहुत्वम् । **सतां सद्भि**रिति—सत्यश्च सन्तश्च सन्तः तेषां सताम् । तैः सद्भिः साधुभिरित्यर्थः । प्रकृते सत्याः मम सता त्वया सङ्गः सहवास इत्यूह्यम् ॥ 'जात्वर्थे स्यात्कथमपि' इति **नाममाला** । **न पराधीन**मिति स्वाधीनमित्यर्थः । अपिरेकोऽधिकः वश्चाधिक इति केचित् ॥१॥

---

[1] 'फलकुसुमपल्लवार्घ्येण माम्' **व–घ–क**. [2] 'वितीर्य' इति **न**. [3] 'यथेच्छाभोग्यम्' **न**.

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

( उपविशतः । )

**वनदेवता**—कां पुनरत्रभवतीमवगच्छामि ।

**तापसी**—आत्रेय्यस्मि ।

**वनदेवता**—आर्ये आत्रेयि कुतः पुनरिहागम्यते । किंप्रयोजनो वा दण्डकारण्यप्रवेशः ।

**आत्रेयी**—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥ ३ ॥

**वनदेवता**—यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते तत्कोऽयमार्याया दीर्घप्रवासप्रयासः ।

---

**अत्र** सत्सङ्गतौ ॥ **प्रियप्राया वृत्तिः**रिति ॥ २ ॥ **प्रियस्य** इष्टवस्तुनः **प्रायः** आधिक्यं यस्यां सा । 'प्रियमिष्टं' इति 'प्रायो भूम्नि' इति **वैजयन्त्यमरौ** । 'मर्यादाचरणे वृत्तिः' इति **नामनिधानम्** । **नियमः** व्रतम् । **प्रकृत्या** स्वभावेन । **अनवगीतः** अनिन्द्यः । **अविपर्यासितः** असंजातविपर्ययः । **रसः** प्रीतिः अभिनिवेशो वा यस्मिन् । **अनुपधि** अकैतवम् । **विशेषेण शुद्धम्** । तदिदं **रहस्यम्** । 'विपर्यासो वैपरीत्ये' इति, 'प्रीतावभिनिवेशे च रसः' इति, 'रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु' इति च **केशवमेदिन्यमराः** ॥२॥ **आत्रेयी** अत्रेः शिष्या गोत्रोद्भवा वा । न नाम्नि विप्रतिपत्तिः । **पुनः** वाक्यालङ्कारे । किं प्रयोजनं यस्मिन् प्रवेशे सः **किंप्रयोजनः** ॥ **अस्मिन्नगस्त्य** इति ॥ ३ ॥ भूयांस उद्गीथेति सन्धिसङ्कटं क्वचिदार्षवदनुमाह्यम् । अत

---

१ 'विनयमसृणः' **ब**. २ 'प्रचारः' **क-ब**; '°रण्योपवनप्रचारः' **न**; 'किंप्रयोजनं वा दण्डकारण्यप्रवेशस्य' **घ**.

**आत्रेयी**—तत्र महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः ।

**वनदेवता**—कीदृशः ।

**आत्रेयी**—तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम् । तत्खलु न [१]केवलमृषीणामपि तु चराचराणां भूतानामान्तराणि तत्त्वान्युपस्नेहयति ।

**वनदेवता**—अपि तयोर्नामसंविज्ञानमस्ति ।

**आत्रेयी**—तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

**वनदेवता**—कीदृशः प्रभावः ।

**आत्रेयी**—तयोः किल सरहस्यानि जृम्भकास्त्राण्याजन्मसिद्धानीति ।

**वनदेवता**—अहो नु भोश्चित्रमेतत् ।

**आत्रेयी**—तौ च भगवता वाल्मीकिना धात्रीकर्मतः[२] परिगृह्य पोषितौ रक्षितौ च । निर्वृत्त[३]चौलकर्मणोश्च तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन परिनिष्ठापितौः[४] । समनन्तरं च गर्भैकादशे[५] वर्षे क्षात्रेण कल्पेनोपनीय गुरुणा त्रयीविद्यामध्यापितौ । न ह्येताभ्याम-तिप्रदीप्तप्रज्ञामेधाभ्यामस्मदादेः सहाध्ययनयोगोऽस्ति । यतः ।

---

एव 'आद्ये उभे इत्यपि' इत्यस्मद्व्याख्यात**भारतचम्पौ** । **उद्गीथो** नाम साम्नो द्वितीया भक्तिः । **तद्विद्** इत्यर्थः । 'ओमित्येतदक्षरं उद्गीथमुपासीत' इति **छान्दोग्ये** । **अधिगन्तुं** प्राप्तुम् । **निगमान्तः** वेदान्तः । **पर्यटामि** संचरामि ॥ **यदा** यस्मादिति च पाठः । **पुराणं** पुरातनं च तद् **ब्रह्मेति** पुराणेषु यद्ब्रह्म वा तद्वादीति कश्चिदाह तन्न भवत्यगस्त्येऽनुग्राहके सति वाल्मीकिमधिकृत्य पुराणब्रह्मवादीति कथनस्यानौचित्यात् । तच्चानुग्राहकत्वं रामाय कृतधनुरर्पणप्रसादस्य 'ततो युद्धपरिश्रान्तं' इत्यादिनोपदिष्टवतो भगवतोऽगस्त्य-

---

१ 'केवलं तस्य अपि तु तिरश्चामप्यन्तःकरणानि तत्त्वानि' **न.** २ '०**कर्मवस्तुतः**' **व**; 'कर्म वस्तुतः' **घ—क.** ३ 'वृत्तचूडौ च त्रयी०' **व**; 'वृत्तचौडकर्मणोश्च तयोस्त्रयी०' **घ.** ४ 'परिपाठितौ' **व.** ५ 'तदनन्तरं भगवतैकादशे' **न.**

**वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे**
**न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।**
**भवति च तयोर्भूयान्भेदः फलं प्रति तद्यथा**
**प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः ॥ ४ ॥**

**वनदेवता**—अयमसावध्ययनप्रत्यूहः ।

**आत्रेयी**—अन्यच्च ।

---

स्याश्रमवर्णने हृदयवसतेरुपास्यपदाब्जस्य शिवस्य स्थानं विना विष्णोः स्थानं इति विष्ण्वादिस्थानानां व्यवस्थापितत्वेन रामायणे सुप्रसिद्धम् । प्रकृते कथाप्रपञ्चाय कविना वाल्मीकिप्रस्तावः कृत इति बोध्यम् । **प्राचेतसं** वाल्मीकिम् । **उपासते** उपासनां कुर्वन्ति । **तदिति** ततस्तदा इति च पाठेऽपि तस्मादित्येवार्थः । यमेति ध्वनिः । **प्रत्यूहः** विघ्नः । **दीर्घप्रवास** इति ध्वनिः । **तत्रभगवतः** वाल्मीकेः । **देवताविशेषेण** । गङ्गयेत्यर्थः । इदं च तृतीयाङ्कविष्कम्भे स्पष्टीभविष्यति । ' प्रकारो लक्षणेऽपि च' इति **यादवः । स्तनयोः त्यागमात्रं** यस्मिन् **वयसि** । ' कार्त्स्न्ये मात्रेऽवधारणे' इत्यमरः । मात्रक इति स्वार्थे कः । अत एव ' उपवासादिपुण्यकः' इति **चतुर्वर्गः** । 'संमोक्षकैः' इति च **अमरसिंहे**नोक्तम् । **दारकौ** पुत्रौ । **उपनीतं** समीपे आनीतमिति यावत् । समीपे तत्रभवत इति पूर्वेणान्वयः । **अपि तु** किन्तु इत्यर्थः । **भूतानां** प्राणिनाम् । **आन्तराणि** बाह्येतराणि । **तत्त्वानि** करणानि अङ्गानि वा । तथा च अन्तःकरणानि अन्तरङ्गानि वेत्यर्थः ॥ ' तत्त्वं तु करणाङ्गयोः' इति **संसारावर्तः** । स्नेहयुक्तानि करोति **स्नेहयति** । ' चिह्ने संज्ञानं' इति **नामनिधानम्** । ' रहस्यं तु मन्त्रे च' इति **केदारः** । अति भृशम् । **चित्रं** आश्चर्यम् ॥ ' अत्यतीवातीवतराम्' इति **त्रिरूपः** । **हिशब्दो** वाक्यालङ्कारे । **भो** इति स्वमनः प्रति संबोधनम् । ' संबोधने तु हे है भोः' इति **रत्नमाला** । **धात्रीकर्मतः** उपमातृकृत्याद्धेतोः । अन्नपानादिभिः **पोषितौ** हिंस्रजन्तुभ्यो **रक्षितौ**वित्यर्थः । त्रयी वेदत्रयी वर्ज्या यस्मिन् कर्मणि तत् **त्रयीवर्ज्यं** यथा तथा । **तिस्रो विद्याः** अक्षराभ्यासः, खुरलीविहारः, वाहनायुधशिक्षा चेति । **परिनिष्ठापिताः** परि परितः, निष्ठां विद्यानामन्तं प्रापिता इत्यर्थः । ' निष्ठा निष्पत्तिनाशान्ताः' इत्यमरः । **दीप्तता** प्रकाशः । योगः सुगतिः युक्तिर्वा ॥ **वितरति गुरु**रिति ॥ ४ ॥ **तयोः** प्राज्ञजडयोः । **फलं** सिद्धिम् । **प्रति** उद्दिश्य । तदेवोपपादयति—**तद्यथे**ति ॥ शुचिः निर्मलः । ' बिम्बमा-

---

१ 'पुनर्' इति न–क. २ 'बिम्बोद्ग्राहे' ब–घ. ३ 'मृदां चयः' क–घ–ब.

**वनदेवता**—अथापरः कः ।

**आत्रेयी**—अथ स ब्रह्मर्षिरेकदा माध्यन्दिनसवनाय नदीं तमसामनुप्रपन्नः । तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन विध्यमानं ददर्श । आकस्मिकप्रत्यवभासां च देवीं वाचमव्यतिकीर्णा[1]मानुष्टुभेन छन्दसा परिणतामभ्युदैरयत् ।

> **मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।**
> **यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ५ ॥**

**वनदेवता**—चित्रमाम्नाया[2]दन्यो नूतनश्छन्दसामवतारः ।

**आत्रेयी**—तेन खलु पुनः समयेन तं भगवन्तमाविर्भूतशब्दब्रह्मप्रकाशमृषिमुपसङ्गम्य भगवान्भूतभावनः पद्मयोनिरवोचत्—'ऋषे प्रबुद्धोऽसि वागात्मनि ब्रह्मणि तद्ब्रूहि रामचरितम् । अव्याहतज्योतिरार्षं ते[3] प्रतिभाचक्षुः । आद्यः कविरसि' इत्युक्त्वा तत्रैवान्तर्हितः । अथ स भगवान्प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय ।

---

कृतौ' इति **हैमः । मणिः** । दर्पणः । आदिशब्देन काष्ठादीनि गृह्यन्ते । अत्र तुहिशब्दौ पादपूरकौ । हि प्रसिद्धाविति केचित् ॥ ४ ॥ **तमसा**-नदीविशेषः । **तत्र** तमसायाम् । तमसातीरे इति यावत् । गङ्गायां घोष इत्यादिवदूह्यम् । युग्मेन द्वन्द्वेन चरतोः **युग्मचारिणोः** । अकस्मात् अवशात् भवः **आकस्मिकः । प्रत्यवभासः** स्फूर्तिः यस्याः ताम् । **अव्यतिकीर्णा** विशेषेणासङ्कीर्णाम् । सुविभक्तामित्यर्थः । शय्यासन्दर्भादिभिः प्रसन्नामिति यावत् । **अभ्युदैरयत्** उदीरयामास ॥ **मा निषाद प्रतिष्ठा**मिति ॥ ५ ॥ **निषादः** व्याधः । **शाश्वतीः** ध्रुवाः । **समाः** संवत्सरान् वर्षशतमित्यर्थः । 'कालाध्वनोः' इति द्वितीया । **प्रतिष्ठां** स्थितिम् । **मा गमः** मा गच्छः ॥ ननु 'न माङ्योगे' इति अडागमप्रतिषेधात् कथं अगमः इतिचेन्न । 'मा देवि दैन्यमगमः शुभचिह्नमेतत्त्वां पुष्पकं वहति यत्' इति **दण्डिकाव्ये** प्रयोगदर्शनान्न दोषः॥ अथवा—अगम इत्यत्र अ इति गम इति च पदद्वयम् । तथा च मा निषाद भो व्याधेत्यर्थः । 'आहो भो हे किमव्ययङ्गमुखाः सम्बोधनार्थकाः' इति **केदारः** ॥

---

१ एतन्नास्ति **न**–पुस्तके; '°कीर्णवर्णाम्' **क–घ**. २ 'आम्नायादन्यत्र' **न**. ३ 'ते प्रातिभं चक्षुः' **क–घ–व**; 'ते चक्षुः प्रतिभातु' **न**.

**वनदेवता**—हन्त तर्हि मण्डितः[1] संसारः।

**आत्रेयी**—तस्मादवोचं[2] तत्र हि महानध्ययनप्रत्यूह इति।

केचित्तु—मागमः नागम इत्यर्थः। 'न ना नो मेत्यभावे स्युः' इत्य**गस्त्यः** इत्याहुः। आर्षं तु नाक्षेपमर्हतीत्यन्ये पेठुः। जीवतामेव कवने दौष्पाण्डित्यं दुर्जना उरीकुर्वन्ति। अन्येषां तु पुष्पोत्पाटनमपि कर्तुं नालममीति साधवो निगदन्तीति दिक्॥५॥ **आम्नायात्** वेदात्। **तेन** प्रसिद्धेन। **समयेन** संविदा। छन्दोरूपया चिदेत्यर्थः। उपलक्षितम्। 'समयः कालसंविदोः' इति **रुद्रः**। **भगवन्तं** माहात्म्यशालिनं कीर्तिमन्तं वा, **भगवान्** षाड्गुण्यपरिपूर्णः। भूतान् चराचरान् भावयति जनयतीति वा, भूतानां भावना भक्तिः यस्मिन्निति वा **भूतभावनः**। 'भावस्सत्तात्मजन्तुषु' इति **हेमचन्द्रः**। 'भावना भक्तौ' इति **धरणिः**। यादृशी भावनेति वस्तुनिर्णयः। प्रकृष्टं बुद्धं बोधः यस्य। **वागात्मनि** शब्दरूपे **ब्रह्मणि** इत्यनेन परं ब्रह्माऽधिगमिष्यसीति भावः॥ 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इति स्मरणात्। **अव्याहतं** अप्रतिहतं **ज्योतिः** तेजःप्रसरः यस्य तत्। **प्रतिभैव चक्षुः**। 'प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः' इति प्राञ्चः। **आद्यः** अद्य भव इत्यर्थः। अद्यैव देव्या प्रसादपात्रीकृतत्वादिति भावः। आद्यः वरो वा। 'वराद्यतनयोराद्यः' 'प्रथमज्येष्ठयोर्गुरौ' इत्य**गस्त्यः**॥ प्रथम इति केचित्॥ तन्न॥ वाल्मीकेरद्यैव कवितायां प्रत्यक्षविरोधात्, इदं कविभ्य इति नान्दीपद्यस्य गणपत्यर्थताविच्छेदापत्तेश्च॥ न च वाच्यं— 'आदिकाव्यमिदं प्रोक्तं पुरा वाल्मीकिना कृतम्। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना॥' इत्यादिवचनानां का गतिरिति, 'नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्' इति प्रश्नेनैव आद्यकवित्वोच्छेदात् तेषां वचनानामर्थवादपरत्वमनुसन्धेयम्। किञ्च वाल्मीकिवन्नारदस्याप्याद्यकवित्वं न संबोभवीति, 'मुने वक्ष्याम्यहं बुध्वा' इति तेनैव कथनात्। तस्माद् 'वाल्मीकिना कृतम्' इत्यादीनां 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इत्यन्तानां वचनानां पूर्वपक्षतया दौर्बल्यात्, 'यस्य निश्वसितं वेदाः सेतिहासाः सहागमाः' इति सिद्धान्तवचनप्राबल्येन वाल्मीकिव्यासादयः सर्वेऽपि प्रवचनकर्तार इति महान्तो निगदन्ति। शिष्यडिम्भाः किञ्चिदपि न जानीमहे वयम्। विशेषज्ञा एवात्र प्रमाणम्। इति दिक्॥ **तत्रैवेति**—यत्र प्रदेशे अवोचत् तत्रैवेत्यर्थः। **प्रथमं** आदौ। **तादृशं** अनिर्वाच्यम्। **विवर्तः** परिणामः। 'इतिहासः पुरावृत्तं' इत्यमरः। **अवोचं** अब्रवम्। अर्थादहमिति सिद्धम्। **भद्रे**

१ 'पण्डितः' ख-च-न. २ 'तस्मादवोचं तदनुरोधान्नस्तत्र' घ.

3012

**वनदेवता**—युज्यते ।

**आत्रेयी**—विश्रान्तास्मि भद्रे । संप्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।

**वनदेवता**—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

**आत्रेयी**—( सास्रम् । ) अप्येतत्तपोवनम् । अप्येषा पञ्चवटी । अपि सरिदियं गोदावरी । अप्ययं गिरिः प्रस्रवणः । अपि जनस्थानवनदेवता वासन्ती त्वम् ।

**वनदेवता**—तथैव[1] तत्सर्वम् ।

**आत्रेयी**—हा वत्से जानकि ।

**स एष ते वल्लभशाखिवर्गः[2]**
**प्रासङ्गिकीनां विषयः कथानाम् ।**
**त्वां नामशेषामपि दृश्यमानः**
**प्रत्यक्ष[3]दृष्टामिव नः करोति ॥ ६ ॥**

**वासन्ती**—( सभयम् । स्वगतम् । ) कथं नामशेषामित्याह । ( प्रकाशम् । ) आर्ये किमत्याहितं सीतादेव्याः ।

**आत्रेयी**—न केवलमत्याहितं सापवादमपि । ( कर्णे । ) एवमिव ।

**वासन्ती**—अहह दारुणो दैवनिर्घातः । ( इति मूर्च्छति । )

**आत्रेयी**—भद्रे समाश्वसिहि समाश्वसिहि ।

---

इति संबोधनम् । 'अपि प्रश्ने च' इति **हलायुधः** । **तदिति**—त्वया यथा तर्कितं तदेतत्**सर्वं तथैवे**ति यावत् । अथ किमिति बाढमिति च पाठौ ॥ **स एष ते** इति ॥ ६ ॥ **वल्लभाः** प्रियाश्च ते **शाखिनः** वृक्षाः । यद्यपि व्यस्तं विशेषणं चारु, तथापि सर्वे शैलाः इत्यादिवदिदं समाधेयम् ॥ स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । प्रसङ्गभवः प्रासङ्गिकः । नाम्ना नाम्नि विशेषं ( वा शेषाम् ? ) **दृश्यमानः** । मयेति शेषः । मे मह्यम् । **त्वां प्रत्यक्षदृष्टामिव करोति** ।

---

१ 'अस्त्येतत् सर्वम्' **क–घ–व.** २ 'बन्धुवर्गः' **क–घ–व.** ३ 'प्रत्यक्षदृश्याम्' **क–घ–व.**

**वासन्ती**—हा प्रियसखि हा महाभागे ईदृशस्ते निर्माणभागः। हा रामभद्र। अथवा अलं त्वया। आर्ये आत्रेयि अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः।

**आत्रेयी**—नहि नहि।

**वासन्ती**—हा कष्टम्। आर्यारुन्धतीवसिष्ठाधिष्ठितेषु नः[1] कुलेषु जीवन्तीषु च प्रवृद्धासु राज्ञीषु कथमिदं जातम्।

**आत्रेयी**—ऋष्यशृङ्गाश्रमे गुरुजनस्तदासीत्। संप्रति तु परिसमाप्तं तद्द्वादशवार्षिकं सत्रम्। ऋष्यशृङ्गेण च सम्पूज्य विसर्जिता गुरवः। ततो भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह। तदेव राममातृभिरनुमोदितम्। तदनुरोधाद्भगवतो वसिष्ठस्य परि[2]शुद्धा वाचो वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति।

**वासन्ती**—अथ स[3] राजा किमाचारः संप्रति।

**आत्रेयी**—तेन राज्ञा क्रतुरश्वमेधः प्रक्रान्तः।

**वासन्ती**—हा धिक् परिणीतमपि।

**आत्रेयी**—शा[4]न्तं पापम्। नहि नहि।

---

मे इत्यत्र **न** इति पाठे अस्मभ्यमित्यर्थः। अत्र निर्वेदाद्बहुवचनत्वम्। अत एव। 'वयं तत्त्वान्वेषात्' इत्यस्मद्व्याख्यातशाकुन्तले। **वल्लभः** रामो वा। **ते वल्लभे**त्यत्र 'रतेर्गृहीतानुनयेन' इतिवदुपपत्तिः॥ वनदेवतानामपरिज्ञानेन **वासन्तीति** व्यवहारः कृतः इति बोध्यम्॥६॥ **अत्याहितं** महाभीतिः। **अपवादः** कौलीनम्। **एवमिवेति**—रामेण सीता परित्यक्तेत्यादिवृत्तमुक्तमिति बोध्यम्। **दैवमेव निर्घातः** वज्रनिर्घोषः। **भागः** अंशः। **अलमिति** कृतमित्यर्थः। कोपखेदाभ्यामलमित्युक्तमिति भावः। 'वृत्तं चरित्रे' इत्यमरः। **प्रवृत्तिः** वार्ता ध्वनिश्च। **आर्यौ** च तौ **अरुन्धतीवसिष्ठौ** ताभ्याम्। **कुलेष्विति** पूजायां बहुत्वम्। **गुरवः** वसिष्ठादयः। **अनुरोधः** अनुवर्तनम्। 'श्रद्धा त्वासक्तिः' इति **पदमाला**। ध्वनिश्च। कः आचारः आचरणं यस्य

---

१ 'रघुकदम्बकेषु' क—च; 'रघुकुलकदम्बकेषु' घ. २ 'वसिष्ठस्यापि श्रद्धा' न. ३ 'स रामभद्रः' न. ४ 'शान्तम्' न; 'शान्तं शान्तं' घ—व.

**वासन्ती**—का तर्हि यज्ञे सहधर्मचारिणी ।

**आत्रेयी**—हिरण्मयी सीताप्रतिकृतिः ।

**वासन्ती**—हन्त भोः ।

> **वज्रादपि कठोराणि मृदूनि कुसुमादपि ।**
> **लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥ ७ ॥**

**आत्रेयी**—विसृष्टश्च वामदेवाभिमन्त्रितो मेध्योऽश्वः । उपकल्पिताश्च तस्य यथाशास्त्रं रक्षितारः । तेषामधिष्ठाता च लक्ष्मणात्मजश्चन्द्रकेतुर[1]वाप्तदिव्यास्त्रसंप्रदायश्चतुरङ्गसाधनान्वितोऽनुप्रहितः ।

**वासन्ती**—( सस्नेहकौतुकास्रम् । ) कुमारलक्ष्मणस्यापि पुत्रः । हन्त मातर्जीवामि ।

**आत्रेयी**—अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षि[2]प्य राजद्वारे सोरस्ताडमब्रह्मण्यमुद्घोषितम् । ततो न राजापचारमन्तरेण प्रजास्वं[3]कालमृत्युः सं[4]चरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्—

> **शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।**
> **शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥ ८ ॥**

---

**किमाचारः** । **क्रतुराजः** यज्ञश्रेष्ठः । **प्रक्रान्तः** आरब्धः । **भो** इति मनः प्रति संबोधनम् ॥ **वज्रादपि कठोराणीति** ॥७॥ **लोकोत्तराणां** भुवनश्रेष्ठानाम् । 'सर्वं कृत्यं साधु सर्वोत्तराणाम्' इति **भारविः** । सीतापरित्यागेन रामचेतसः कठोरत्वं अपुनःपरिणयेन मृदुत्वं चेति भावः ॥७॥ **मेध्यः** पवित्रः । **प्रयुक्ताः** प्रयोजिताः । **शास्त्रं** श्रौतपद्धतिः । **अधिष्ठाता** प्रमुखः । **प्रहितः** प्रेषितः । **मातर्जीवामीति** द्राविडस्त्रीस्वभावोक्तिः । एवं वदता कविना निजं द्राविडत्वं प्रकटितमित्यूह्यम् । **उत्क्षिप्य** उद्धृत्य । उरस्ताडेन सहितं **सोरस्ताडं** यथा तथा । 'तडस्ताडनम्' इति **द्विरूपः** । 'अब्रह्मण्यमवध्योक्तिः' । **आत्मनः** रामस्येत्यर्थः । ( वा ) **गुदेति** ध्वनिः । उद्भवदिति च पाठः ॥ **शम्बूको नाम वृषल इति** ॥ ८ ॥ **वृषलः** शूद्रः । **शीर्षच्छेद्यः** **वध्यः** ।

---

१ 'दत्त°' इति **न.** २ 'पुत्रमारोप्य' **घ–व.** ३ 'प्रजानाम्' **न;** 'प्रजायाम्' **घ–व.** ४ 'चरति' **व–घ.**

इत्युपश्रुत्यैवाकृष्टकृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः सञ्चरितुमारब्धवान्[1] ।

**वासन्ती**—शम्बूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति । तदपि नाम रामभद्रः पुनरपीदं वनमलङ्कुर्यात् ।

**आत्रेयी**—भद्रे आगम्यतेऽधुना ।

**वासन्ती**—आर्ये आत्रेयि एवमस्तु । कठोरीभूतस्तु[2] दिवसः ।

**कण्डूलद्विपगण्डपिण्डकषणाकम्पेन[3] सम्पातिभि-**
**र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम् ।**
**छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः**
**कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥**

( इति परिक्रम्य निष्क्रान्ते । )

**इति शुद्धविष्कम्भः ।**

---

**एनं** शम्बूकम् । **द्विजं जीवय** इति कथनमहिम्ना शम्बूके हते पुत्रजीवनेन द्विजोऽपि जीविष्यति । अन्यथा न जीविष्यतीति भावस्सूच्यते ॥८॥ **दिशः** इन्द्रादिदिशः । **विदिशः** अग्न्यादिदिशः । 'दिशोर्मध्ये विदिक् स्त्रियाम्' इत्यमरः । **शूद्र**श्चासौ **तापस**श्च । **तत्** तस्मात् । **अपि नाम** इति सम्भावनाप्रसिद्धौ । रमयतीति रामः । रम क्रीडायाम् । रामश्चासौ भद्रः मङ्गलकरः **रामभद्रः** । **वनमल**मिति ध्वनिः । गम्यत इत्यर्थे **आगम्यते** इति व्यवहारः सार्वलौकिकः । अनुभवसिद्धश्च । **कठोरः** दुस्सहः सूर्यकिरण इति यावत् । तदेवोपपादयति तथाहीति ॥ **कण्डूलद्विपगण्डे**ति ॥ ९ ॥ **कण्डूलाः** कण्डूयुक्ताश्च ते **द्विपाः** गजाः । तेषां **गण्डाः** कपोलाः । त एव **पिण्डाः** गोलाः तेषां **कषणं** घर्षणम् । तस्माद्धेतोः । **आकम्पेन** समन्तात्कम्पनेन । **सम्पातिभिः** पतनवद्भिः । **घर्मे**ण निदाघेन । **स्रंसितं** संजातस्रंसनं **वृन्तं** येषां तानि 'स्रंसस्तु गलनं च्युतिः' इति 'वृन्तं प्रसवबन्धनम्' इति च **हारावल्यमरौ** । **छायासु अवस्किरमाणाः** मेहन्तश्च ते **विष्किराः** पक्षिणः । **तैर्मुखेन** त्रोट्या । **व्याकृष्टाः** विशेषेण आकृष्टाः । **कीटानां त्वचः** चर्माणि येषु ते । अपस्किरेति पाठे भक्षणाय भुवि विदारयन्तश्च ते विष्किरा इति योज्यम् । विदारयन्तः 'विकरिते' इति **महाराष्ट्राः** । **कूले** तीरे । कुलाययुक्ता वृक्षाः । 'कुलायो नीडमस्त्रियाम्'

---

१ 'सञ्चारं समारब्धवान्' न. २ 'कठोरश्च' न. ३ 'कषणोत्कम्पेन' क-घ-व.

( ततः प्रविशति पुष्पकस्थः सदयोत्खातखड्गो रामः । )

**रामः**—

**हे[1] हस्त दक्षिण मृतस्य शिशोर्द्विजस्य**
**जीवातवे विसृज शूद्रमुनौ कृपाणम् ।**
**रामस्य गात्र[2]मसि निर्भर[3]गर्भखिन्न-**
**सीताविवासनपटोः करुणा कुतस्ते ॥ १० ॥**

( कथंचित्प्रहृत्य । ) कृतं रामसदृशं कर्म । अपि जीवेत्स ब्राह्मणपुत्रः ।

( प्रविश्य )

**दिव्यपुरुषः**—जयतु जयतु देवः ।

**दत्ताभये त्वयि यमादपि दण्डधारे**
**सञ्जीवितः शिशुरसौ मम चेयमृद्धिः ।**
**शम्बूक एष शिरसा चरणौ नतस्ते**
**सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥**

**रामः**—द्वयमपि प्रियं नः । तदनुभूयतामुग्रस्य तपसः परिपाकः[4]।

**यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च[5] सम्पदः ।**
**वैराजा नाम ते लोकास्तैजसाः सन्तु ते शिवाः[6] ॥ १२ ॥**

---

इत्यमरः । गण्डपिण्डेति ध्वनिः । 'गलद्दानगण्डं' इति **भगवत्पादाः** । 'कूलनीत इव कुङ्कुमपिण्डः' इति **कुङ्कुमकविः** । गण्डमण्डलकषेति च पाठः । क्षणक्षणं इति द्विरूपः । छायेत्यत्र शाखेत्यपि च पाठः ॥९॥ शुद्धविष्कम्भ इति ॥ आत्रेयीवनदेवतयोरुदात्तपात्रत्वात् कविना प्राकृतभाषा परिहृतेति बोध्यम् ॥ **सदयं** यथा तथा **उत्खातः** कोशादाकृष्टः खड्गः येन ॥ **हे हस्त दक्षिणे**ति॥१०॥ **द्विजस्य शिशोः** ब्राह्मणपुत्रस्येति विवेकः । **जीवातवे** जीवनौषधाय ॥ ननु तपस्विनि कथं खड्गं विसृजामि इत्याशङ्क्याह—**रामस्येति** । **गात्रं** अङ्गम् । 'अङ्गे च गात्रम्' इति **त्रिकाण्डी** । **निर्भरं** भृशम् । **पटोरि**ति रामस्य विशेषणम् ॥१०॥ **सदृशं** योग्यं निर्दयमिति यावत् ॥ **दत्ताभये त्वयी**ति ॥११॥ **दण्डधारे** शिक्षके । 'दण्डधारो महीपतिः' इति **कामन्दकः** । **समृद्धिः** दिव्या संपदित्यर्थः । **एषः** अहमिति शेषः । 'मरणं निधनोऽस्त्रियाम्' इत्यमरः ॥११॥ **द्वयं** द्विजपुत्रजीवनं तव सङ्गतिश्चेत्यर्थः । **तत्** तस्मात् । **परिपाकः** फलमिति यावत् ॥ **यत्रानन्दाश्चेति** ॥ १२ ॥ **यत्र** येषु लोकेषु । अत्र दयया धातुभेदा-

---

१ 'रे' क–घ–व. २ 'बाहुः' न. ३ 'दुर्वह' क–घ–व. ४ 'फलम्' क–घ–व. ५ 'पुण्याभिसम्भवाः' व–घ. ६ 'ध्रुवाः' घ–व.

**शम्बूकः**—[1]युष्मत्प्रसादोपादान एवैष महिमा । किमत्र तपसा । अथवा महदुपकृतं तपसा ।

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः स इह तपसां संप्रसादोऽन्यथा चेत्
कायोध्यायाः पुनरुपगमो दण्डकायां वने वः ॥ १३ ॥

**रामः**—किं नाम दण्डकेयम् । ( सर्वतोऽवलोक्य । ) हा कथम् ।

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम् ।
एते तीर्थाश्रमगिरिसरिद्[2]गर्तकान्तारमिश्राः
सन्दृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ १४ ॥

**शम्बूकः**—दण्डकैवैषा । अत्र किल पूर्वं निवसता देवेन

---

दानन्दमोदानामवान्तरभेद ऊह्यः । 'मनोज्ञापूतयोः पुण्यम्' इति **नामनिधानम्** । विराट्क्ष ...... तत्संबन्धिनो **वैराजाः ते** प्रथमाबहुवचनम् । **तैजसाः** तेजोमयाः । **शिवाः** मङ्गलकराः । **ते** तुभ्यम् । **सन्त्व**ति योज्यम् । पादपूरकाविति केचित् ॥१२॥ **युष्मत्प्रसाद** एव **उपादानं** कारणं यस्य महिमासाधक इति भावः । **अत्र** वैराजनामलोकलाभे । **महदुपकृतं** महानुपकारः कृत इति यावत् ॥ **अन्वेष्टव्यो यदसी**ति ॥ १३ ॥ **वृषलकं** अल्पशूद्रम् । **प्राप्तोऽसी**ति **यत् इह** प्राप्तौ । **स** इति संप्रदाया(संप्रसादा?) नुगुण्येन पुल्लिङ्गतानिर्देशः । **अन्यथा चेत्** एवं न चेदित्यर्थः । **अयोध्याया** इति पञ्चमी । नित्यस्त्रीलिङ्गतया **दण्डकायां** इत्युक्तम् । अस्मिन्वने तथा च दण्डकावने इति फलितोऽर्थः । अत एव । 'तदुपमा कुसुमान्यखिलाः शराः' इति **श्रीहर्षः** । **पुनरुपगमः** पुनरागमनं त्वित्यर्थः । तस्मान्मम तप एव साधकतमं इति भावः । स इहेति कथनविलम्बसङ्कटं कवेश्चातुर्यमिति संप्रदायज्ञाः ॥१३॥ आश्चर्यादाह—**किन्नामेति** ॥ **स्निग्धश्यामा** इति ॥१४॥ **स्निग्धाः** मसृणाः । **अपरतः** अन्यतः । **आभोगेन** परिपूर्णतया । **रूक्षाः** क्षवो (?) दुष्प्रवेशा इति यावत् । **झांकृतैः** शब्दानुकारैः । **मुखराः** शब्दायमानाः **ककुभः** दिशः येषां येषु वा । 'तीर्थमृषिजुष्टजले गुरौ' इत्यमरः । **गर्ताः** अवटाः । 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः, **तैः सान्द्राः** निबिडाः । **परिचिताः** अनुभूताः **भुवः** स्थलानि येषाम्,

---

१ 'युष्मत्प्रसादादेव' न–क; 'युष्मत्पादप्रसादोपाय एष' घ–ब. २ 'गर्भ' घ–ब.

चतुर्दश सहस्राणि चतुर्दश च राक्षसाः[1]
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ १५ ॥

येन सिद्धक्षेत्रे[2]ऽस्मिञ्जनस्थाने मादृशामपि जानपदानाम[3]कुतोभयः सञ्चारो जातः ।

**रामः**—न केवलं दण्डका जनस्थानमपि ।

**शम्बूकः**—बाढम् । एतानि खलु सर्वभूतरोमहर्षणान्युन्मत्तचण्डश्वापदकुलसङ्कुलैर्[4]गिरिगह्वराणि जनस्थानपर्यन्तदीर्घारण्यानि दक्षिणां दिशमभिवर्तन्ते । तथाहि ।

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीर[5]भोगभुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विरलस्वच्छाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

---

'भूः क्षितौ च स्थलेऽङ्गणे' इति **रभसः** । **भागाः** प्रदेशाः । कान्तारं अरण्यम् । इति केचित् । तन्न ॥ वर्ण्यमानस्य दण्डकारण्यस्य बन्धशैथिल्यापत्तेः ॥१४॥ **चतुर्दश सहस्राणी**ति ॥ १५ ॥ **त्रिमूर्धान** इति–अत्र 'द्वित्रिभ्यां ष मूर्ध्नः' इति षप्रत्ययेन समासान्तविधेरनित्यत्वात् ॥१५॥**येन** राक्षसानां हननेनेत्यर्थः । **जानपदानां** देशवासिनाम् । न विद्यते कुतः कस्मादपि भयं यस्मिन् **अकुतोभयः** । **दण्डके**ति भिन्नं पदम् । **बाढं** इत्यङ्गीकारे । **भूतानां** प्राणिनाम् **रोमहर्षणं** रोमाञ्चः येभ्यो येषु वा । 'रोमाञ्चो भयहर्षाद्यैः' इति **समयपद्धतिः** । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । **अभिवर्तन्ते** आभिमुख्येन वर्तन्ते ॥ भङ्ग्यन्तरेणाह ॥ **निष्कूजस्तिमिता** इति ॥१६॥ **निष्कूजाः** निर्गतकूजिताश्च ताः **स्तिमिताः** निश्चलाः । 'कूजितं कूजनं कूजः' इति **द्विरूपः** । **भोगाः** फणिकायाः **श्वासैः** श्वसितानिलैः । प्रकर्षेण **दीप्ताः अग्नयः** वनवह्नयः यासु । **सीमान** इति नान्तः शब्दः । 'सीमसीमे स्त्रियामुभे' इत्यमरः । अत्र बहवो भ्रमन्ति । **प्रदराः** अवटाः । **विरलानि** अनिबिडानि **स्वच्छाम्भांसि** यासु ताः सीमानः । सीमासु **तृष्यद्भिः** तृषावद्भिः । **प्रतिसूर्यकैः** । 'सरटाविशेषे प्रतिसूर्यकः' **इत्यगस्त्यः** । अयमसौ 'तिलिप्सुः स्यादजगरः' इत्यमरः ।

---

१ 'रक्षसां भीमकर्मणाम्' **क–घ–व.** २ 'सिद्धिक्षेत्रे' **घ.** ३ 'भीरुजनानाम्' **घ–व.** ४ 'कुलाक्रान्तविकटगिरि०' **न.** ५ 'घोर' **क–घ;** 'घोष' **व.**

**रामः—**

**पश्यामि च जनस्थानं भूतपूर्वखरालयम् ।**
**प्रत्यक्षानिव वृत्तान्तान्पूर्वाननुभवामि च ॥ १७ ॥**

( सर्वतोऽवलोक्य । ) प्रियारामा हि सर्वथा वैदेह्यासीत् । एतानि तानि नाम कान्ताराणि । किमतः परं भयानकं[1] स्यात् । ( सास्रम् । )

**त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु ।**
**इतीहारमतैवासौ[2] स्नेहस्तस्याः स तादृशः ॥ १८ ॥**
**न[3] किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।**
**तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ १९ ॥**

---

गजाबळा (?) महासर्पा अजगर इति **महाराष्ट्राः** ॥१६॥ **पश्यामि च जनस्थानं** इति ॥ १७ ॥ पूर्वं भूतः **भूतपूर्वः** । भूतपूर्वखरालयमिति जनस्थानविशेषणम् । 'निलयालयाः' इत्यमरोक्त्या नित्यपुल्लिङ्गत्वेऽपि विशेषणविशेष्यभावे बाधकं नेति व्युत्पन्नविशेषज्ञाः । अत एव 'भटान्तहेतुर्वैरम्' इत्यस्मद्व्याख्यात**भारतचम्पौ** । रीतिरियं पूर्वं दण्डकायामित्यत्र दर्शितप्राया ॥ अथवा—खरस्यालयो यस्मिन्निति व्युत्पत्त्या नपुंसकमपि जनस्थानविशेषणमेतत् । 'तुहिचस्महवै पादपूरणे' इत्यमरः ॥ केचित्तु—जनस्थानं खरालयं च पश्यामि, इत्याहुः । तन्न ॥ भूतपूर्वमिति, 'निवेशः शैलानां' इति च, कव्युक्तवक्ष्यमाणवाक्यविरोधात् । 'त्रिषु प्रत्यक्षं' इति, 'इवोपमायां चालीके' **इत्यगस्त्यकेदारौ** ॥ वृत्तान्तांस्तान्त तति ( ? ) शास्त्रे सिद्धमपि सन्धिसङ्कटं कविजनासंमतमिति अलमतिविस्तरेण ॥१७॥ **आरामः** उपवनम् ॥ **त्वया सह** इति ॥१८॥ **इह** कान्तारेषु ॥ यद्यपि अरमत सेति वक्तव्ये, अरमतासावित्युक्तम् भूतार्थत्वात् । तथापि सर्वदा हृदि स्थिततया असाविति पुरःस्थिततया तस्या इति च निर्देशः ॥ ननु द्वयमप्युच्यते, क एषन्य... ( ? ) किमेषां राजाज्ञेति चेन्नैवम् । ततोऽप्यधिकैव कवीनां वाग्वैखरी । अत एव—'मानमुद्धतनृपाः कस्तैस्सह स्पर्धते' इति **भर्तृहरिः** ॥ 'यद्यद्यथा यथा ब्रूयुः कवयो रवयो नवाः । तत्तत्तथा तथाबव्यमत एव निरङ्कुशाः ॥' इति **मण्डनमिश्राश्च** । तस्मान्मूकतैव शरणम् । **तादृश** इति षष्ठी, तादृक्छब्दः । अनिर्वाच्याया इत्यर्थः । **सः** प्रसिद्धः । **स्नेहः तादृशः** अनिर्वाच्य इत्यर्थः । अदन्तोऽयं शब्दः । '**इति सारमतैवेह**' इति वा तृतीयः पादः पठनीय इति ॥१८॥ **न किञ्चिदपि कुर्वाण इति** ॥ १९ ॥

---

१ 'भयानकस्य' **ब–घ.** २ 'इतीवारमते ह्यसौ' **न;** 'इति चारमतेवासौ' **ब;** 'इतीवारमतीवासौ' **घ.** ३ 'अकिञ्चित्' **ब–घ.**

**शम्बूकः**—तदलमेभिर्दुस्सहैः । अथैतानि मदकलमयूरकण्ठकोमलच्छविभिरवकीर्णानि पर्वतैरविरलनिविष्टनीलबहलच्छायतरुणतरुषण्डमण्डितान्यसंभ्रान्तविविधमृगयूथानि पश्यतु महाभागः प्रशान्तगम्भीराणि मध्यमारण्यकानि ।

**इह समदशकुन्ताक्रान्तवानीरवीरुत्-**
**प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।**
**फलभरपरिणामश्यामजम्बूनिकुञ्ज-**
**स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥**

अपि च ।

**दधति कुहरभाजामत्र भल्लूकयूना-**
**मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।**

---

तत्किञ्चित् न किञ्चिदिति च पाठः । **अपोहति** दूरीकरोतीति यावत् । सामान्यत उक्त्वा विशेषतश्चाह–**तदिति** । **यः जनः यस्य प्रियः** इष्टम् । **तत्** स जनः प्रतिकर्तेत्यर्थः । द्रव्यानुगुण्येन तदिति नपुंसकत्वनिर्देशः । भिन्नलिङ्गत्वेपि न दोष इति **दण्डी** व्याजहार । अत एव । 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इति **भर्तृमीढः** । **तस्य** प्रीतिपात्रभूतजनस्य । **किमपि** अनिर्वाच्यम् । उपकारादिप्रत्युपकारादिलौकिकव्यवहारलक्षणपरिहीणं वा **द्रव्यं** वस्तु । 'द्रव्यं भव्ये गुणाश्रये' इत्यमरः । धनमिति वार्थः । **हि** प्रसिद्धौ । प्रकृते तस्येति स्थाने राम इति तद्द्रव्यमिति स्वरे सीतेति भावो बोध्यः ॥ **दुस्सहैः** खेदैरिति शेषः । **अथे**त्यानन्तर्ये । प्रश्ने वा । 'कोमलं मृदुरम्ययोः' इति **रुद्रः** । **अवकीर्णानि** संवलितानि । **सान्द्रं** यथा तथा **निविष्टाः** निवेशं प्राप्ताः । भगानां समूहो **भागम्** । **महत् भागं** यस्य । 'भगः श्रीकाममाहात्म्यप्रभावोत्साहकीर्तिषु' इति **संसारावर्तः** । महान्तो भागाः प्रदेशाः यस्येति वा । प्रकर्षेण **शान्ताः** शान्तिनिष्ठाः तैः **गम्भीराणि** ॥ **इह समदशकुन्तेति** ॥ २० ॥ **आक्रान्ताः** आरूढाः । 'वानीरो देवपुन्नागः' इति **धन्वन्तरिः** । **प्रसवाः** पुष्पाणि । **परिणामः** पक्वता । **जम्बूनिकुञ्जेषु** जम्बूमयकुञ्जेषु । **स्खलनेन** प्रतिघातेन **मुखराणि** शब्दायमानानि । **भूरीणि** भूयांसि **स्रोतांसि** यासाम् 'स्रोतोऽम्बुसरणं स्वतः' इत्यमरः । 'पाझर' इति **महाराष्ट्राः** । **निर्झरिण्यः** नद्यः । वहन्ति प्रवहन्तीति यावत् । स्खलनेति ध्वनिः ॥ २० ॥ **दधति कुहरभाजामिति** ॥ २१ ॥ **कुहरभाजां** बिलसेविनाम् । **भल्लूकेषु** ऋक्षेषु । **यूनां** तरुणानाम् । **अनुरसितैः** प्रतिध्वनिभिः । **गुरूणि** पुष्टतराणि । **अम्बूकृतानि**

---

१ 'पर्यन्तैः' व–घ–क. २ 'बहुलच्छायातरु' न. ३ 'महारण्यानि' न. ४ 'मुक्त' न.

शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ २१ ॥

**रामः**—( सबाष्पस्तम्भम् । ) भद्र शिवास्ते पन्थानो देवयानाः । प्रलीयस्व पुण्येभ्यो लोकेभ्यः ।

**शम्बूकः**—यावत्पुराणब्रह्मवादिनमगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि । ( इति निष्क्रान्तः । )

**रामः**—

एतत्पुनर्वनमहो कथमद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः ।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ २२ ॥

एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि ।
आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनीरनिचुलानि सरित्तटानि ॥ २३ ॥

श्लेष्मनिर्गलहितकरध्वनयः इत्यर्थः । 'अम्बूकृतं सनिष्ठीवम्' इत्यमरः । 'स्त्यानसमभिवृद्धौ' इति रत्नकोशः । दधति बिभ्रति । शिशिरस्सन् कटुश्चासौ कषाय इति विवेकः । शिशिरः शीतलः । कटुः मरीच्यादिरसजातीयः । कषायः तुवरः । सल्लकीनां गजभक्ष्यवृक्षविशेषाणाम् । विकीर्णाः । पतिताः ये ग्रन्थयः पर्वाणि । 'काण्डी'इति महाराष्ट्राः । तेषां ग्रन्थीनां निष्यन्दस्य गन्धः 'समौ निर्यासौ' इति शब्दार्णवः । स्त्यायते अभिवर्धते, 'उपचीयत' इति माठरः। अत्र चतुर्थचरणे विशेषणविशेष्ययोरभिन्नपदत्वं मध्यमम् । 'व्यस्तं विशेषणं चारु' इति न्यायात् ॥२१॥ वाक्स्तम्भेन खेदवशात् प्रतिवाक्याभावेन सहितं यथा तथा शम्बूकमाह—भद्रेति—ते तुभ्यम् । देवानां यानं संचारः येषु । 'तृप्ता यात पथिभिर्देवयानैः' इति श्रुतेः । यावदनुप्रविशामि प्रवेक्ष्यामीत्यर्थः ॥ एतत्पुनर्वनमिति ॥ २२ ॥ दृष्टं अस्माभिरिति शेषः । पुरा पूर्वम् । वयं वसन्तः निवसन्तः अभूम स्थिता इति यावत् स्वधर्मे रताः आरण्यकाः । सांसारिकेषु सुखेषु रसज्ञाः गृहिणश्चेति विशेषणे योज्ये । चद्वयं पादपूरणे ॥ २२ ॥ एते त एवेति ॥ २३ ॥ विरुवन्तः नदन्तः मयूरा

१ 'निष्पन्द' घ. २ 'देवयानं प्रतिपद्यस्व' क–घ–व. ३ 'ब्रह्मर्षिमगस्त्यमभिवाद्य' न. ४ 'तदेव हि पुनर्वनमद्य' क–घ–व. ५ 'वञ्जलरतानि' न. ६ 'नील' क–व–घ; 'नीप' न.

मेघमालेव यश्चायमारादिव विभाव्यते ।
गिरिः प्रस्रवणः सोयं यत्र गोदावरी नदी ॥ २४ ॥

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्याः पयसि विततश्यामलानोकहश्री-
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः ॥ २५ ॥

तदत्रैव सा पञ्चवटी यत्र चिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता । किमिदमापतितमद्य रामस्य । संप्रति हि ।

---

येषु । आ समन्तात् । **मन्द्राणि** मञ्जुलानि रुतानि येषु । **नीरन्ध्रनीराणि** निबिडजलान्येव **निचुलाः** विधानसाधनानि येषाम् । 'मन्द्रस्तु गम्भीरे' इति, 'मञ्जु मञ्जुलं' इति, 'तिरश्चां वाशितं रुतं' इति, 'निचुलः प्रच्छदपटः' इति चामरः ॥२३॥ **मेघमालेवेति** ॥२४॥ 'माला स्यात्पङ्क्तिमाल्ययोः' इति, 'आराद्दूरसमीपयोः' इति **मेदिन्यमरौ** । **आरादिवे**त्यत्र इव शब्दो वाक्यालङ्कारे । इहेति च पाठः । अत्र गुणज्ञैरन्वये तुर्यः पादः प्रथमं योज्यः । तेन चकारस्य सार्थक्यम् । प्रथमपादे अयमिति शब्दो व्यर्थः ॥ न च वाच्यं योऽयं वायौ वाति सति इत्यादिन्यायशास्त्रवाक्यवदुपपत्तिरिति ॥ सत्यम्, तत्र सगुणत्वादित्येवोक्तः । प्रकृते यथाकथञ्चित् प्रथमतृतीयचरणान्तोक्तयोरयमितिशब्दयोरन्यतरोऽजागलस्तनायते इति दिक् ॥ २४ ॥ **अस्यैवासीन्महतीति** ॥ २५ ॥ अस्य प्रस्रवणगिरेः । **तस्य** शिखरस्य । 'अधोऽधस्तादि'ति **द्विरूपः** । **वयमिति** सीतालक्ष्मणसमेता इति भावः । **रताः** स्थिताः इति यावत् । **तेषु** प्रसिद्धेषु लक्ष्मणबद्धेषु वा । **यत्र** उटजेषु सत्स्विति शेषः । **वितता** विस्तृता **श्यामला** च **अनोकहश्रीः** वृक्षशोभा यस्मिन् । 'श्रीर्वेषरचना शोभा संपत्सरलशाखिषु । वाणीलक्ष्मीलवङ्गेषु विषबिल्वे च' इति **विश्वः** । मधुरशकुन इति विश्वः । मधुरशकुन इति सुपाठः । मुखरेति कश्चित् । तन्न, पौनरुक्त्यापत्तेः । **वनान्तः** । वनस्यान्तः उद्देशः आसीदित्यनुषङ्गः । 'अन्तोग्रनिधनोद्देशावसानेषु' इति **पदार्थमाला** । श्रीरन्त इति ध्वनिः ॥ **वासन्तिकेति**–आत्रेय्या सह संवादं या कृतवती सैवेति बोध्यम् । **किमापतित**मिति । अत्र प्रियसखी वर्तते कुतो वयं समागता इति, अस्यावर्तनेन संप्रत्यस्माकं किं फलमिति वा भावः । तदित्यत्र ताव-

---

१ 'आरादपि' क–घ–व. २ 'प्रतिवसति' इत्यधिकं घ–व–पुस्तकयोः.

शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्द[1]गन्धः ॥ २१ ॥

**रामः**—( सबाष्पस्तम्भम् । ) भद्र शिवास्ते पन्थानो देवयाना[2]: । प्रलीयस्व पुण्येभ्यो लोकेभ्यः ।

**शम्बूकः**—यावत्पुराणब्रह्मवादिन[3]मगस्त्यमृषिमभिवाद्य शाश्वतं पदमनुप्रविशामि । ( इति निष्क्रान्तः । )

**रामः**—

[4]एतत्पुनर्वनमहो कथमद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः ।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ २२ ॥

एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि ।
आमञ्जुवञ्जुल[5]लतानि च तान्यमूनि
नीरन्ध्र[6]नीरनिचुलानि सरित्तटानि ॥ २३ ॥

---

श्लेष्मनिर्गलहितकरध्वनयः इत्यर्थः । 'अम्बूकृतं सनिष्ठीवम्' इत्यमरः । 'स्त्यानमभिवृद्धौ' इति **रत्नकोशः** । **दधति** बिभ्रति । **शिशिरस्सन् कटु**श्चासौ **कषाय** इति विवेकः । शिशिरः शीतलः । कटुः मरीच्यादिरसजातीयः । कषायः तुवरः । **सल्लकीनां** गजभक्ष्यवृक्षविशेषाणाम् । **विकीर्णाः** । पतिताः ये **ग्रन्थयः** पर्वाणि । 'काण्डी'इति **महाराष्ट्राः** । तेषां ग्रन्थीनां **निष्यन्दस्य गन्धः** ' समौ निर्यासौ' इति **शब्दार्णवः** । **स्त्यायते** अभिवर्धते, ' उपचीयत' इति **माठरः** । अत्र चतुर्थचरणे विशेषणविशेष्ययोरभिन्नपदत्वं मध्यमम् । 'व्यस्तं विशेषणं चारु' इति न्यायात् ॥२१॥ वाक्स्तम्भेन खेदवशात् प्रतिवाक्याभावेन सहितं यथा तथा शम्बूकमाह—**भद्रेति**—**ते** तुभ्यम् । **देवानां यानं** संचारः येषु । 'तृप्ता यात पथिभिर्देवयानैः' इति श्रुतेः । **यावदनुप्रविशामि** प्रवेक्ष्यामीत्यर्थः ॥ **एतत्पुनर्वनमिति** ॥ २२ ॥ **दृष्टं** अस्माभिरिति शेषः । **पुरा** पूर्वम् । वयं **वसन्तः** निवसन्तः **अभूम** स्थिता इति यावत् **स्वधर्मे रताः आरण्यकाः** । सांसारिकेषु सुखेषु रसज्ञाः गृहिणश्चेति विशेषणे योज्ये । चद्वयं पादपूरणे ॥ २२ ॥ **एते त एवेति** ॥ २३ ॥ **विरुवन्तः** नदन्तः **मयूरा**

---

१ 'निष्पन्द' **घ.** २ 'देवयानं प्रतिपद्यस्व' **क–घ–व.** ३ 'ब्रह्मर्षिमगस्त्यमभिवाद्य' **न.** ४ 'तदेव हि पुनर्वनमद्य' **क–घ–व.** ५ 'वञ्जलरुतानि' **न.** ६ 'नील' **क–व–घ;** 'नीप' **न.**

मेघमालेव यश्चायमारा॑दिव विभाव्यते ।
गिरिः प्रस्रवणः सोयं यत्र गोदावरी नदी ॥ २४ ॥

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्याः पयसि विततश्यामलानोकहश्री-
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः ॥ २५ ॥

तदत्रैव सा पञ्चवटी यत्र चिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः प्रियायाः प्रियसखी च वासन्ती नाम वनदे॑वता । किमिदमापतितमद्य रामस्य । संप्रति हि ।

---

येषु । आ समन्तात् । **मन्द्राणि** मञ्जुलानि रुतानि येषु । **नीरन्ध्रनीराणि** निबिडजलान्येव **निचुलाः** विधानसाधनानि येषाम् । 'मन्द्रस्तु गम्भीरे' इति, 'मञ्जु मञ्जुलं' इति, 'तिरश्चां वाशितं रुतं' इति, 'निचुलः प्रच्छदपटः' इति चामरः ॥२३॥ **मेघमालेवेति** ॥२४॥ 'माला स्यात्पङ्क्तिमाल्ययोः' इति, 'आराद्दूरसमीपयोः' इति **मेदिन्यमरौ** । **आरादिवे**त्यत्र इव शब्दो वाक्यालङ्कारे । इहेति च पाठः । अत्र गुणज्ञैरन्वये तुर्यः पादः प्रथमं योज्यः । तेन चकारस्य सार्थक्यम् । प्रथमपादे अयमिति शब्दो व्यर्थः ॥ न च वाच्यं योऽयं वायौ वाति सति इत्यादिन्यायशास्त्रवाक्यवदुपपत्तिरिति ॥ सत्यम्, तत्र सगुणत्वादित्येवोक्तः । प्रकृते यथाकथञ्चित् प्रथमतृतीयचरणान्तोक्तयोरयमितिशब्दयोरन्यतरोऽजागलस्तनायते इति दिक् ॥ २४ ॥ **अस्यैवासीन्महतीति** ॥ २५ ॥ अस्य प्रस्रवणगिरेः । **तस्य** शिखरस्य । 'अधोऽधस्तादि'ति **द्विरूपः । वयमिति** सीतालक्ष्मणसमेता इति भावः । **रताः** स्थिताः इति यावत् । **तेषु** प्रसिद्धेषु लक्ष्मणबद्धेषु वा । **यत्र** उटजेषु सत्स्विति शेषः । **वितता** विस्तृता **श्यामला च अनोकहश्रीः** वृक्षशोभा यस्मिन् । 'श्रीर्वेषरचना शोभा संपत्सरलशाखिषु । वाणीलक्ष्मीलवङ्गेषु विषबिल्वे च' इति **विश्वः** । मधुरशकुन इति विश्वः । मधुरशकुन इति सुपाठः । मुखरेति कश्चित् । तन्न, पौनरुक्त्यापत्तेः । **वनान्तः** । वनस्यान्तः उद्देशः आसीदित्यनुषङ्गः । 'अन्तोऽप्रनिधनोद्देशावसानेषु' इति **पदार्थमाला** । श्रीरन्त इति ध्वनिः ॥ **वासन्तिकेति**–आत्रेय्या सह संवादं या कृतवती सैवेति बोध्यम् । **किमापतित**मिति । अत्र प्रियसखी वर्तते कुतो वयं समागता इति, अस्यावर्तनेन संप्रत्यस्माकं किं फलमिति वा भावः । तदित्यत्र ताव-

---

१ 'आरादपि' क–घ–व. २ 'प्रतिवसति' इत्यधिकं घ–व–पुस्तकयोः.

**[1]चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः**
**कुतश्चित्संवेगात्प्रचल इव शल्यस्य शकलः ।**
**व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुन-**
**[2]र्घनीभूतः शोको विकलयति मां नूतन इव ॥ २६ ॥**

[4]तथापि तान्पूर्वसुहृदो भूमिभागान्पश्यामि । ( निरूप्य । ) अहो अनवस्थितो भूतसंनिवेशः । तथाहि ।

**पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां**
**विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।**
**बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं**
**निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ २७ ॥**

हन्त परिहरन्तमपि मामितः पञ्चवटीस्नेहो[6] बलादाकर्षतीव । (सकरुणम्)

**यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे**
**यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयत ।**

---

तेति च पाठः । मद्य रामस्येति ध्वनिः ॥ **चिराद्वेगारम्भी**ति ॥२६॥ **चिरात्** बहुकालानन्तरम् । **वेगः कौटिल्यम्** । **प्रसृतः** व्याप्तः । **कुतश्चित्** कस्मादपि **संवेगात्** संभ्रमात् । अङ्गसन्धिबन्धचलनादिति यावत् । **प्रचलः** चञ्चलः । शल्यस्य बाणादिमुखवर्तिनः अयोग्य(ग्र?)स्येत्यर्थः । 'शल्यं शङ्कुः' इत्यमरः । **शकलः** खण्डः । 'अबुकणीति' (?) **महाराष्ट्राः** । **रूढः** आनुकूल्याय संजातः ग्रन्थिः यस्मिन् सः **व्रणः स्फुटितः** विदीर्णः । **हृन्मर्मणी**ति बाधातिशयद्योतनायोक्तम् । 'भूतः प्राप्ते च जाते च' इति **शब्दमाला** । **विकम्पयति** शकलयति विफलयतीति च चत्वारः पाठाः ॥ २६ ॥ **पूर्वसुहृद** इति भूमिभागानां विशेषणम् । इदं द्वितीयाबहुवचनम् । पुरातनमित्राणीत्यर्थः । **निरूप्य** विभाव्य । **भूतानां सन्निवेशः** अवस्थानम् । 'भूतं क्ष्मादौ' इत्यगस्त्यः । सरितां प्रदेश इति शेषः ॥ **पुरा यत्र स्रोत** इति ॥२७॥ **विपर्यासं** वैपरीत्यम् । **घनविरलभावः** सान्द्रपेलवत्वम् । 'पेलवं विरलम्' इत्यमरः । **क्षितिरुहां** वृक्षाणाम् । **अपरं** इतरत् । वनमिदं । **तदिदं** अवस्थानमिति शेषः । अर्थाच्छैलानामित्यनुषङ्गः । तथा च पुरा ये स्थिताः त एवैते शैलाः इति बुद्धिं **द्रढयति** दृढीकरोतीत्यर्थः ॥ २७ ॥ **सकरुणमि**ति 'करुणस्तु रसे वृक्षे कारुण्येऽपि च' इति **विश्वः** ॥ **यस्यां ते दिवसा** इति ॥ २८ ॥ **यस्यामि**ति यच्छब्देन

---

१ 'चिरोद्वेगा०' ब–घ. २ 'पुराभूतः' न. ३ 'मूर्छयति च' क–घ. ४ 'तथाविधानपि' न. ५ 'भूमि' क–घ–ब. ६ 'पञ्चवटी स्नेहात्' न. ७ 'पुनः' ब. ८ 'सम्बन्ध' न.

एकः संप्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा ॥२८॥

शम्बूकः—जयतु जयतु देवः । देव भगवानगस्त्यो मत्तः श्रुतभवत्संनिधानस्त्वामाह—'परिकल्पितविमानावतरणमङ्गला प्रतीक्षते वत्सला लोपामुद्रा सर्वे च महर्षयः । तदेहि सम्भावयास्मान् । अथ प्रजविना पुष्पकेण स्वदेशमुपगम्याश्वमेधाय सज्जो भविष्यसि'इति ।

रामः—यथाज्ञापयति भगवान् ।

शम्बूकः—इतस्तर्हि देवः प्रवर्तयतु पुष्पकम् ।

रामः—( पुष्पकं प्रवर्तयन् । ) भगवति पञ्चवटि गुरुजनोपरोधात्क्षणं क्षम्यतामयमतिक्रमो रामस्य ।

शम्बूकः—देव पश्य पश्य ।

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन्प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः ॥ २९ ॥

अपि च ।

---

पञ्चवटी प्रख्याते । ते सुखमया इति भावः । **नाशिता** त्यक्तेति यावत् । सांप्रतं उज्झितेति युक्तः पाठः। यस्यां ते इति ध्वनिः॥२८॥ **मत्तः** पञ्चमी, ध्वनिश्च । **लोपामुद्रा** अगस्त्यस्य पत्नी । **अथ** आनन्तर्ये । **प्रवर्तयन्** अभिमुखीकुर्वन् इति यावत् ॥ **गुञ्जत्कुञ्जकुटीरेति** ॥ २९ ॥ **गुञ्जन्तः कुञ्जकुटीरे ये कौशिकाः** घूकाः तेषां **घटाः** समूहः तेषां **घूत्कारः** घूत्करणम् । तद्वन्तः ये **कीचकाः** वंशाः । तेषां **स्तम्बाः** गुल्माः । तेषु **अडम्बराः** गर्वरहिताः । अत एव **मूकाश्च** ते **मौकिलाः** काकाः । तेषां **कुलं** सङ्घः यस्मिन् । कलापिनां मयूराणाम् । **कूजितैः** केकाभिः **उद्वेल्लन्ति** कम्पन्ते । तेषां भुजङ्गभक्षकत्वादिति भावः । **पुराणाः** पुरातनाश्च ते **रोहिणतरवः** चन्दनवृक्षाः । **कुम्भीनसाः** सर्पा इत्यर्थः । कुञ्ज एव कुटीरं पर्णशाला । **प्रकृते**

---

१ 'तामेव' न. २ 'परिकल्पितावरण' न. ३ 'चागस्त्यायनाः' ब—घ. ४ 'गुरुजनादेशोप°' न. ५ 'कूजत्' क. ६ 'क्रौञ्चाभिधोऽयं' न.

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दक्षिणाः ।
अन्योन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥३०॥

(निष्क्रान्तौ ।)

**पञ्चवटीप्रवेशो नाम द्वितीयोऽङ्कः ।**

---

नीडमिति दयनीयोऽर्थः । 'करिणां घटना घटा' इत्यमरः । प्रकृते औपचारिकः प्रयोगः । फूत्कारः शब्दानुकारः । 'डम्बरो रुचिगर्वयोः' इति **कपिलः** । 'हैरम्बमम्बुरुहडम्बर' इति अस्मद्व्याख्यात**भोजचम्पौ** ॥ आडम्बरेति कश्चित् । तन्न । मूकपदविरोधात् ॥ एतस्मिंश्चेति ॥ एतस्मिंश्चेति सन्धिसङ्कटं कवेश्चातुर्यम् । प्रचलाकिनां इति पाठे न बाधकम् । 'प्रचलाकिकलापिनौ' इति **त्रिकाण्डशेषः** । **उद्वेजिताः** उद्वेगं प्रापिताः इत्यर्थः ॥ २९ ॥ अपि चेति ॥ **एते ते कुहरेष्विति** ॥ ३० ॥ **ते** प्रसिद्धाः **कुहरेषु** गुहाबिलेषु । **गद्गदं** यथा तथा **नदन्ति गोदावरीवारीणि** येषाम् । **मेघैः आलम्बिता मौलयः** शिखराधोभागाः येषाम् अत एव ते च ते **नीलशिखराः** । 'दाक्षिणात्ये च दक्षिणः' इति **शब्दकोशः** । **अन्योन्यं** परस्परम् । **प्रतिघातैः** प्रहारैः । **संकुलं** संकीर्णं यथा तथा **चलन्तः** गच्छन्तश्च ते **कल्लोलाः** महातरङ्गाः तेषां **कलकलैः** । 'उत्तालमुखरौ समौ' इति **वैजयन्ती** । **गभीराणि पयांसि** येषु । 'पुण्यः पूतमनोज्ञयोः' इति **विक्रमार्कः** । **सरित्सङ्गमाः** नदीसङ्गमाः । गद्गदमिति शब्दानुकारः । 'संकीर्णं सङ्कुले' इति, 'निम्नं गभीरं गम्भीरम्' इति चामरः । अत्र पूर्वतनवर्णनादस्य वनस्य महारण्यत्वं सूचितम् ॥ 'सरितो यत्र शैलाश्च तन्महारण्यमुच्यते ॥' इति **लीलाशुकोक्ते**रित्यलमतिविस्तरेण ॥ ३० ॥ इति महाराजपद + उत्तररामचरितसञ्जीवनाख्यटिप्पणे द्वितीयोऽङ्कः समाप्तः ॥

॥ इति द्वितीयोऽङ्कः ॥

---

१ 'मेघालङ्कृत' व. २ 'दाक्षिणाः' क—न. + प्रथमाङ्कटीकासमाप्तौ टीकाकारेण यदात्मवृत्तं कथितं तत्सर्वमत्राप्यनुसन्धातव्यम्.

# तृतीयोऽङ्कः ।

( ततः प्रविशति नदीद्वयम् । )

एका—सखि मुरले किमसि संभ्रान्तेव ।

मुरला—सखि तमसे प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम् । जानास्येव यथा वधूपरित्यागात्प्रभृति

**अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।**
**पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥**

तेन च तथाविधेष्टजनकष्टविनिपातजन्मना प्रकृष्टतां गतेन दीर्घशोकसन्तानेन संप्रत्यतितरां परिक्षीणो रामभद्रः । तमवलोक्य कम्पितमिव सबन्धनं मे हृदयम् । अधुना च प्रतिनिवर्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहवासविस्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः । तेषु च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात्पदे पदे महान्ति प्रमादस्थानानि शङ्कनीयानि रामभद्रस्य । तद्भगवति गोदावरि तत्र त्वया सावधानया भवितव्यम् ।

---

अथ तृतीयोऽङ्कः ॥ अथ वरप्रसादात्प्रत्यक्षसीताकरस्पर्शसुखं रामाय वर्णयिष्यन् नदीद्वयसंलापेन विष्कम्भकथामुट्टङ्कयति—**तत** इति ॥ **अनिर्भिन्नो गभीरत्वादि**ति ॥ १ ॥ **अनिर्भिन्नः** अप्रकाशः । **गुरुः** गुर्वी । **पुटपाकस्य** प्रतीकाशः उपमा यस्य । **करुणः** खेदमयः इत्यर्थः ॥ १ ॥ **इष्टजनः** सीता । 'विनिपातः विनियोगे च' इति **रत्नकोशः** । **प्रकृष्टतां** आधिक्यम् । **सन्तानेन** विस्तारेण । बन्धनेन सहितं **सबन्धनम्** । 'बन्धनं ग्रन्थौ' इति **संसारावर्तः** । 'उराचि गाठ' इति **महाराष्ट्राः** । **तेन** दर्शनेनेत्यर्थः । **आभोगः** परिपूर्णता । तत्रभवत्याः पूज्यायाः ॥

---

१ 'अनिर्भिन्नगभीरत्वात्' व—घ. २ 'प्रकर्षगतेन' क—घ—व; 'प्रकर्षगद्गदेन' न. ३ 'सन्तापेन' क—घ. ४ एतन्नास्ति क—घ—व—पुस्तकेषु; 'कुसुमसमबन्धनं' न. ५ 'महाप्रमादानि शोकस्थानानि' न.

**वीचीवातैः शीकरक्षोदशीतै-**
**राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।**
**मोहे मोहे रामभद्रस्य जीवं**
**स्वैरं स्वैरं [1]प्रेरितैस्तर्पयेति ॥ २ ॥**

**तमसा**—उचितमेव दाक्षिण्यं स्नेहस्य। सञ्जीवनोपायस्तु मौलिकः[2] एव रामभद्रस्याद्य सन्निहितः ।

**मुरला**—कथमिव ।

**तमसा**—श्रूयताम्। [3]पुरा किल वाल्मीकितपोवनोपकण्ठात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेवी प्राप्तप्रसववेदनमतिदुःखसंवेगादात्मानं गङ्गाप्रवाहे निक्षिप्तवती । तदैव तत्र दारकद्वयं प्रसूता । भगवतीभ्यां पृथ्वीभागीरथीभ्यामभ्युपपन्ना रसातलं च नीता । स्तन्यत्यागात्परेण च दारकद्वयं तस्याः[4] प्राचेतसस्य महर्षेर्गङ्गादेवी [5]स्वयमर्पितवती ।

**मुरला**—( सविस्मयम् । )

**ईदृशानां विपाकोऽपि जायते परमाद्भुतः ।**
**यत्रोपकरणीभावमायात्येवंविधो जनः ॥ ३ ॥**

**तमसा**—इदानीं तु शम्बूक[6]वृत्तान्तेनानेन सम्भावितज[7]नस्थानागमनं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं तदेवाशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीं विलोकयितुमागता ।

---

**वीचीवातैरिति** ॥२॥ **गन्धान्** परिमलान् । **प्रेरितैः** त...पवनैरित्यर्थः॥२॥ मूलसम्बन्धी **मौलिकः**। मूलं सीतेति यावत्। 'मूलं पत्नीनिदानयोः' इति **हैमः**। अस्तीति वाक्यखण्डः । **अभ्युपपन्ना** अनुगृहीता ॥ **ईदृशानां विपाक इति** ॥ ३ ॥ **ईदृशानां** सीताप्रमुखजनानाम् । **विपाकः** परिणामः । 'जन्तुषु कर्मणां विपाकः' इति **हनुमन्नाटके**। **उपकरणीभावं** साधनत्वम्। **एवंविधः** ईदृशः। गङ्गापृथिवीप्रमुख इति यावत् ॥३॥ यत्तदोः प्रमादस्थानमर्थं इति बोध्यम् ॥ **अपदेशः** व्याजः । **आभ्युदयिकैः** अभ्युदयकारकैः ।

---

१ 'प्रेषितैः' **क-घ-व.** २ 'मूलत एव' **न.** ३ 'अस्ति खलु' **न.** ४ 'तस्य' **न.** ५ 'गङ्गादेव्या समर्पितं स्वयम्' **न.** ६ 'शम्बूकवधवृत्तान्तेन' **घ.** ७ '°जनस्थानं' **न;** '°स्थानगमनं' **घ.**

**मुरला**—सुचिन्तितं भगवत्या भागीरथ्या। राजधानीस्थितस्यास्य खलु तैस्तैर्जगतामाभ्युदयिकैः कार्यैर्व्यापृतस्य रामभद्रस्य नियताश्चित्तविक्षेपाः। अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति। तत्कथमिदानीं सीतादेव्या रामभद्र आश्वासनीयः स्यात्।

**तमसा**—उक्तमत्र भगवत्या भागीरथ्या 'वत्से देवयजनसम्भवे सीते अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशस्य[1] जन्मसंवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्तते[2]। तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व। न च त्वामवनिपृष्ठचारिणीमस्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किं पुनर्मर्त्याः' इति। अहमप्याज्ञापिता 'तमसे त्वयि प्रकृष्टप्रेमैव वधूर्जानकी। अतस्त्वमेवास्याः प्रत्यनन्तरीभव[3]' इति। साहमधुना यथादिष्टमनुतिष्ठामि।

**मुरला**—अहमप्येतं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि। रामभद्रोऽप्यागत एवेति तर्कयामि।

**तमसा**—तदियं गोदावरीह्रदान्निष्क्रम्य

**परिपाण्डुदुर्बलकपोलसुन्दरं**
**दधती विलोलकबरीकमाननम्।**
**करुणस्य मूर्तिरथवा[4] शरीरिणी**
**विरहव्यथेव वनमेति जानकी॥ ४॥**

---

**सङ्ख्यामङ्गलं** द्वादशी अब्दपूर्तिः। 'वैग्रन्थिरुत्सवपर्वणोः' इति **नानार्थमञ्जरी**। अत एव 'वयसा द्वादशाब्दकौ' इति सप्तमाङ्के गर्भनाटकसन्दर्शने रामं प्रति लक्ष्मणेन वक्ष्यते। **तत्** तस्मात्। **पुराणं** पुरातनश्चासौ...**मानव्यस्य** मानवसमूहस्य। 'मानवानां तु मानव्यम्' इत्यमरः। **प्रसवितारं** जनकम्। **उपतिष्ठस्व** सेवस्व। अप्रेति ध्वनिः। **मर्त्याः** रामादय इति भावः। अत एवाग्रे–'तमसे ओसरम्ह दाव' इति सभयं सीतया वक्ष्यते। **प्रत्यनन्तरीभव** सहाया भवेत्यर्थः॥ **परिपाण्डुदुर्बलेति**॥ ४॥ **कबरी** केशपाशः॥ ४॥

---

१ 'द्वादशजन्मसंवत्सरस्य' घ; 'द्वादशसंवत्सरस्य' **ब.** २ 'अभिबध्यते' **ब.** ३ 'प्रत्यन्तरीभव' **ब.** ४ 'मूर्तिरिव वा' **ब.**

मुरला—इयं हि सा

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

( इति परिक्रम्य निष्क्रान्ते । )

शुद्धविष्कम्भः ।

( नेपथ्ये । )

प्रमादः प्रमादः ।

( ततः प्रविशति पुष्पावचयव्यग्रा सकरुणौत्सुक्यमाकर्णयन्ती सीता । )

सीता—अम्हहे जाणामि पिअसही मे वासन्दी वाहरदि । (क)

( पुनर्नेपथ्ये । )

सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा वर्धितोऽभूत् ।

सीता—किं तस्स । (ख)

( पुनर्नेपथ्ये । )

वध्वा सार्धं पयसि विहरन्सोऽयमन्येन दर्पा-
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः ॥ ६ ॥

---

( क ) अम्हहे जानामि प्रियसखी मे वासन्ती व्याहरतीति ।

( ख ) किं तस्य ।

---

॥ किसलयमिवेति ॥ ५ ॥ किसलयमिव स्थितमिति शेषः । शरीरविशेषणमेतत् । बन्धनात् वृन्तात् । दीर्घशोकः अव्यस्तं पदं मध्यमम् । क्षामं कृशम् ॥ ५ ॥ इति शुद्धविष्कम्भः ॥ औत्सुक्यं उत्कण्ठा । अहो जानामि प्रियसखी वासन्ती व्याहरतीति । व्याहरति क्रन्दतीत्यर्थः ॥ सीतादेव्याः स्वकरेति ॥ ६ ॥ कलितैः दत्तैः । सल्लकी गजभक्ष्यतरुः । 'लोलः साशः' इति कपिलः । तस्मात् किं तस्य । वध्वा निजकरिण्या । सार्धं सह । 'चण्ड उद्दाम उद्धतः' इति शब्दार्णवः । 'उद्दामस्य कलेः' इति गोवर्धनः । अभियुक्तः अभिगृहीतः । 'अभियोगस्त्वभिग्रहः'

---

१ 'पोषितः' ब–घ.

**सीता**—( ससंभ्रमम् । कतिचित्पदानि गत्वा । ) अज्जउत्त परित्ताहि
ारित्ताहि मह तं पुत्तअम् । ( स्मृतिमभिनीय सवैक्लव्यम् । ) हद्धी हद्धी ।
ाइं ज्जेव्व चिरपरिचिदाइं अक्खराइं पञ्चवटीदंसणेण मं मन्दभाइणिं
ंणुबन्धन्ति । हा अज्जउत्त । ( इति मूर्च्छति । ) (क)

( प्रविश्य । )

**तमसा**—वत्से समाश्वसिहि । समाश्वसिहि ।

( नेपथ्ये )

वेमानराज अत्रैव स्थीयताम् ।

**सीता**—( समाश्वस्य ससाध्वसोल्लासम् । ) अम्हहे जलभरभरिअमे-
मन्थरत्थणिअगम्भीरमंसलो कुदो णु एसो भारईणिग्घोसो भरन्त-
ण्णविवरं मं वि मन्दभाइणिं झत्ति उस्सुआवेइ । (ख)

**तमसा**—( सस्मेहास्यम् । ) अयि वत्से

( क ) आर्यपुत्र परित्रायस्व परित्रायस्व मम तं पुत्रकम् । हा धिक् हा
धिक् । तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनु-
ध्नन्ति । हा आर्यपुत्र ।

( ख ) अह्महे जलभरभरितमेघमन्थरस्तनितगम्भीरमांसलः कुतो न्वेष
ारतीनिर्घोषो भ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटित्युत्सुकयति ।

स्मरण ॥ ६ ॥ आर्यपुत्र परित्रायस्व परित्रायस्व मम पुत्रकम् । हा धिक् हा धिक्
ान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति ।
ा आर्यपुत्र । 'पुत्रकः कृत्रिमे पुत्रे' इति **संसारावर्तः** । अक्खराइं इति
ालिदासादिवत् कवेः प्रमादः । 'अक्ष्यादिषु छः' इति गणे पठितत्वात् ।
ीने च मन्दभागः' इति **त्रिकाण्डशेषः** । **तमसेति**—अत्र पात्रासूचनं कवेः
माद इति केचित्, तद्रसापङ्क्न्यायानुकरणम् । 'उत्साहभेदतोपादौ पात्रामू-
नं' इति **जयदेवोक्तेः** ॥ अह्महे जलभरभरितमेघमन्थरस्तनितगम्भीरमां-
लः कुतो नु भारतीनिर्घोषः प्रविशन् कर्णविवरं मामपि मन्दभागिनीमुत्सुक-
ति । 'मन्थरस्तु मनोज्ञः' **इत्यमरशेषः** । भरन्तो इति देशीयः शब्दः ।
रतो' इति **महाराष्ट्राः** । **सस्मितास्रमिति**—असंभावितसीतावचनश्रवणा-

१ 'अणुरुन्धन्ति' ( अनुरुन्धन्ति ) वे. २ 'उस्सावेदि' ( उच्छ्वासयति ) ब-घ.;
स्सोवेदि' क.

**अपरिस्फुटनिस्वाने कुतस्त्येऽपि त्वमीदृशी ।**
**स्तनयित्नोर्मयूरीव चकितोत्कण्ठितं स्थिता ॥ ७ ॥**

**सीता**—भअवदि किं भणसि अपरिप्फुडेत्ति । सरसंजोएण पच्चभिजाणामि अज्जउत्तेण एव्व एदं वाहरिदम् । (क)

**तमसा**—श्रूयते तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा जनस्थानमागत इति ।

**सीता**—दिट्ठिआ अपरिहीणधम्मो क्खु सो राआ । (ख)

( नेपथ्ये । )

**यत्र द्रुमा अपि मृगा अपि बन्धवो मे**
**यानि प्रियासहचरश्चिरमध्यवात्सम् ।**
**एतानि तानि बहुनिर्झरकन्दराणि**
**गोदावरीपरिसरस्य गिरेस्तटानि ॥ ८ ॥**

---

( क ) भगवति किं भणस्यपरिस्फुटेति । स्वरसंयोगेन प्रत्यभिजानामि आर्यपुत्रेणैव एतत् व्याहृतम् ।

( ख ) दिष्ट्या अपरिहीनधर्मः खलु स राजा ।

---

दिति भावः ॥ **अपरिस्फुटनिस्वाने इति** ॥ ७ ॥ **निस्वाने** ध्वनौ । 'कुतोभवकुतस्त्यौ' इति **शाश्वतः** । **स्तनयित्नौ** मेघे । चकिता च उत्कण्ठिता च यस्मिन् कर्मणीति क्रियाविशेषणस्य धर्मिपरत्वेऽपि न दोषः । अत एव 'आकुलमीक्षितं जनैः' इति **माघः** ॥ ७ ॥ भगवति किं भणसि अपरिस्फुटेति । स्वरसंयोगेन प्रत्यभिजानामि आर्यपुत्रेणैव एतद्व्याहृतम् । 'शिक्षणे दण्डधारणम्' **इत्यमरमाला** । दिष्ट्या अपरिहीनधर्मः खल्वेष राजा । यच्छब्दद्वयेन तटानि लक्ष्यन्ते ॥ **यत्र द्रुमा अपीति** ॥ ८ ॥ **अधीति**—अधिवासं अकार्षमित्यर्थः । तान्येतानीत्यन्वयः । गोदावरीं परितः सरति व्याप्नोति **गोदावरीपरिसरः** । **तटानीति** प्रमादः 'तटो भृगुः' इत्यमरसिंहेनाभिधानात् । अत एव । 'तीरे तटोऽस्त्री पुंस्येव भृगौ' इति **शब्दमाला** । दिष्ट्या कथं प्रभातचन्द्रमण्डलपरिक्षामः धूमधूसरेणाकारेणायं निजसौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञातव्यः

---

१ 'किमव्यक्तेऽसि निनदे **व**; 'किमव्यक्तेऽपि निनदे' **घ**; '°निकाणे' **न-क**. २ 'मए उण सरसंजोएण पच्चभिआणिदं अज्जउत्तो एव्व वाहरदि' ( मया पुनः स्वरसंयोगेन प्रत्यभिज्ञातं आर्यपुत्र एव व्याहरति ) **क-घ-व**. ३ 'दण्डकारण्यम्' **न**. ४ '°राअधम्मो' **क-व-व**.

**सीता**—( दृष्ट्वा ) दिट्ठिआ कहं पहादचन्दमण्डलापण्डुरपरिक्खामदुब्बलेन आआरेण अअं णिअसोम्मगम्भीराणुभावमेत्तपच्चहिजाणिज्जो अज्जउत्तो एव्व । भअवदि तमसे धारेहि मं । (इति तमसामाश्लिष्य मूर्च्छति । ) (क)

**तमसा**—वत्से समाश्वसिहि समाश्वसिहि ।

( नेपथ्ये । )

अनेन पञ्चवटीदर्शनेन

**अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं[1] ज्वलिष्यतः ।**
**उत्पीड इव धूमस्य मोहः प्रागावृणोति माम् ॥ ९ ॥**

हा प्रिये जानकि ।

**तमसा**—( स्वगतम् । ) इदं तदा[2]शङ्कितं गुरुजनेन[3] ।

**सीता**—( समाश्वस्य । ) हा कहं एदम् । (ख)

( पुनर्नेपथ्ये । )

हा देवि दण्डकारण्यवासप्रियसखि विदेहराजपुत्रि । ( इति मूर्च्छति । )

**सीता**—हद्धी हद्धी । मं मन्दभाइणिं वाहरिअ आमीलंतणेत्त-

---

(क) दिष्ट्या कथं प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामदुर्बलेनाकारेणायं निजसौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञातव्य आर्यपुत्र एव। भगवति तमसे धारय माम्।
( ख ) हा कथमेतत् ।

---

आर्यपुत्र एवं । भगवति तमसे धारय माम् ॥ **आकारेण** आकृत्या उपलक्षितः । 'स्वके नित्ये निजम्' इत्यमरः । **अनुभावः** प्रभावः ॥ **अन्तर्लीनस्य दुःखाग्नेरिति** ॥ ९ ॥ **उद्दामं** उद्भटं यथा तथा । **धूमस्योत्पीडः** । 'कलिकाङ्कुरयोः' इति **मकुटः** । 'अज्ञानभ्रममूर्छादौ मोहः' इति **कपिलः** । **प्राक्** आदौ ॥९॥ **गुरुजनेन** लोपामुद्रयेति पूर्वोक्तमूह्यम् । **विदेहेति** ध्वनिः । हा धिक् हा धिक् । मां मन्दभागिनीं व्याहृत्य मीलन्नेत्रनीलोत्पलो मूर्छित एव । हा कथं धरणीपृष्ठे निरुद्धनिस्सहनिश्वासः पतितः । 'समौ निस्सहदुस्सहौ' इति **त्रिकाण्डशेषः** । विप्रलब्ध इति पाठे वञ्चित इत्यर्थः । जीवितेनेति **शेषः** । **भगवति**

---

१ 'अथोद्दामं' घ. २ 'तावत्' न. ३ 'जनेनापि' व–घ.

णीलुप्पलो मुच्छिदो एव्व । हा कहं धरणिपिट्ठे णिरुद्धणिस्सासणीसहं विपल्हत्थो । भअवदि तमसे परित्ताएहि परित्ताएहि । जीवावेहि अज्जउत्तम् । ( इति पादयोः पतति । ) (क)

तमसा—

**त्वमेव ननु कल्याणि सञ्जीवय जगत्पतिम् ।**
**प्रियस्पर्शो हि पाणिस्ते तत्रैष निरतो जनः ॥ १० ॥**

**सीता**—जं होदु तं होदु । जह भअवई आणवेइ । ( इति ससंभ्रमं निष्क्रान्ता । ) (ख)

( ततः प्रविशति भूम्यां निपतितः सास्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामः । )

**सीता**—( किंचित्सहर्षम् । ) जाणे उण पच्चाअदं विअ जीविअं तेलौअस्स । (ग)

**रामः**—हन्त भोः किमेतत् ।

---

(क) हा धिक् हा धिक् । मां मन्दभागिनीं व्याहृत्यामीलन्नेत्रनीलोत्पलो मूर्छित एव । हा कथं धरणिपृष्ठे निरुद्धनिःश्वासनिःसहं विपर्यस्तः । भगवति तमसे परित्रायस्व परित्रायस्व । जीवयार्यपुत्रम् ।

(ख) यद्भवतु तद्भवतु । यथा भगवत्याज्ञापयति ।

(ग) जाने पुनः प्रत्यागतमिव जीवितं त्रैलोक्यस्य ।

---

तमसे परित्रायस्व जीवयार्यपुत्रम् ॥ **त्वमेव ननु कल्याणीति** ॥ १० ॥ जगत्पतिपदमहिम्ना त्वं लक्ष्मीरिति भावो व्यज्यते । तथा च रामायणे—'सीता लक्ष्मीर्भवान्विष्णुः' इति । **ते** तव **यत्र** यस्यां त्वयीत्यर्थः । **एष जनः** रामः ॥१०॥ यद्भवति तद्भवतु । यथा भगवती आज्ञापयति । जाने पुनः प्रत्यागतमिव जीवितं त्रैलोक्यस्य । एतेन रामस्य त्रैलोक्यस्य च एकार्थवर्णनादद्वैतमेव प्रामाणिकमिति कविना सिद्धान्तमार्गो दर्शित इति बोध्यम् । अत एव 'हरिरेव जगज्जगदेव हरिः' इति, 'सर्वं विष्णुमयं जगत्' इति, 'भूतानि विष्णुर्भुवनानि विष्णुः' इति प्राञ्चः । **भो** इति मनः प्रति संबोधनम् ॥ अथ स्पर्शं द्वाभ्यां विशिनष्टि

---

१ 'तत्रैव नियतो भवः' व; 'तत्रैव नियतो भरः' घ. २ 'त्रैलोक्यनाथस्य' व-घ.

आश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः ।
आतप्तजीवितपुनःपरितर्पणोऽयं
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः ॥ ११ ॥

अपि च ।

स्पर्शः पुरा परिचितो नियतं स एव
सञ्जीवनश्च मनसः परितोषणश्च ।
सन्तापजां सपदि यः परिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥ १२ ॥

**सीता**—( ससाध्वसोत्कम्पमपसृत्य । ) एत्तिअ एव्व दाणिं मे बहुदरम् । (क)

**रामः**—( उपविश्य । ) न खलु वत्सलया सीतादेव्याभ्युपपन्नोऽस्मि ।

**सीता**—हद्धी हद्धी । किं त्ति मं अज्जउत्तो मग्गिस्सदि । (ख)

**रामः**—भवतु । पश्यामि ।

---

( क ) एतावदेवेदानीं मे बहुतरम् ।

( ख ) हा धिक् हा धिक् । किमिति मामार्यपुत्रो मार्गिष्यते ।

---

॥ **आश्च्योतनं नु इति** ॥ ११ ॥ 'रसाविर्भूतये यत्स्यादङ्गुलीभिः प्रपीडनम् । तदाश्चोतनमाश्चोतश्चोतनं' इति च **द्विरूपः** । **आ** समन्तात् **श्चोतनं** गलनं वा । अत एव 'श्च्योतद्भिर्नयनाम्बुभिः' इति अस्मद्व्याख्यात**भारतचम्पौ** । **नु** किम् । 'पुंसि वा हरिचन्दनम्' इत्यमरः । **करकन्दलः** किरणसमष्टिः । 'कन्दे गोले समष्टौ च कन्दलः' इति **संसारावर्तः** । **आ** समन्तात् **तप्तं** च तत् **जीवितं** । **पुनः परि** परितः तर्पयतीति **तर्पण** इत्यर्थः । 'तर्पणं प्रीणनावने' इत्यमरः । प्रकर्षेण सिक्तः प्रशब्दः पादपूरणे इति केचित् । 'स्वप्नो नु माया नु' इत्यस्मद्व्याख्यात**शाकुन्तल**श्लोकानुकाराणामिव एतत्पद्यानुकारयोः पुनरुक्तिः क्षन्तव्या ॥ ११ ॥ **स्पर्शः पुरा परिचित इति** ॥ १२ ॥ **नियतं** नियमप्राप्तं यथा तथा । सम्यक् जीवयतीति **सञ्जीवनः** । सः स्पर्शः । **आनन्दनेन** आनन्दप्रापणेन सभाजनेन वा । जडतां शीतलतां स्तब्धतां वा॥१२॥ एतावदेवेदानीं मे बहुतरं **एताव**ज्जीवनमिति भावः । बहुतरं सुखमिति शेषः। 'वत्सलस्तु प्रसन्नः' इति **हारावली** । **अभ्युपपन्नः** अनुगृहीतः ॥ हा धिक् हा धिक्

---

१ 'प्रश्च्योतनं' घ–व. २ 'जीविततरोः परि' व–ब. ३ '°मोहनश्च' इति क–घ '°मोहणश्च' इति व.

**सीता**—भअवदि तमसे ओसरह्म दाव । मं पेक्खिअ अणब्भणुण्णादेण संणिहाणेण राआ अहिअं कुप्पिस्सदि । (क)

**तमसा**—अयि वत्से भागीरथीप्रसादाद्वनदेवतानामप्यदृश्यासि संवृत्ता ।

**सीता**—हुम्, अत्थि एदम् । (ख)

**रामः**—हा प्रिये जानकि ।

**सीता**—(ससाध्वसगद्गदम् ।) अज्जउत्त असरिसं क्खु एदं इमस्स वुत्तन्तस्स । (सास्रम् ।) अहवा किं त्ति वज्जमई जम्मन्तरेसु वि पुणो असंभाविअदुल्लहदंसणस्स मं एव्व मन्दभाइणिं उद्दिसिअ वच्छ-

(क) भगवति तमसे अपसरावस्तावत् । मां प्रेक्ष्यानभ्यनुज्ञातेन सन्निधानेन राजाधिकं कोपिष्यति ।

(ख) हुम्, अस्ति एतत् ।

कथमार्यपुत्रो मां निर्दिशति । भगवती तमसे अपसरावस्तावत् । मां प्रेक्ष्य अनभ्यनुज्ञातसन्निधानां राजा कोपिष्यति । **वनदेवतानामपी**ति—किमुत अन्यजनानामिति भावः । हुं अस्त्येतत् । हुमित्याकर्णनाभिनयः । 'रामो नाम बभूव हुं' इति **लीलाशुकः** । **ससाध्वसगद्गद**मिति कथनं रामेणाहं दृष्टासीति भ्रान्त्येति बोध्यम् । 'गद्गदं स्खलिताक्षरम्' इति **अमरमाला** । आर्यपुत्र आर्यपुत्र असदृशं खल्वेतस्य वृत्तान्तस्य । 'वृत्तान्तस्तु प्रयोगे च व्यवहारे च' इति **पद्ममाला** । तथा **वृत्तान्तस्य** प्रिये जानकि प्रयोगस्य व्यवहारस्य वा । **एतत्** निरूपणं अभिनयं वेति शेषः । **असदृशं** अनुचितं खल्वित्यर्थः ॥ अथ स्वमानसं प्रत्याह—अहवेति । अथवा किमिति वज्रमयी जन्मान्तरेषु पुनस्संभावितनुलाग्रलब्धदर्शनस्य मां मन्दभागिनीमुद्दिश्यैवंवत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भविष्यामि । अहमेवैतस्य हृदयं जानामि । एतेषामपि मम । **वज्रमयी** अतिकठोरेति यावत् । **जन्मान्तरेषु** आगामिजन्मसु । पुनस्संभावितं तुलाग्रलब्धस्येव घटाशिखरशलाकाया इव । अवधानविशेषलभ्यं दर्शनं यस्य । 'तुला घटा' इति, 'शिखराग्रलयोरग्रं' इति, 'लब्धं प्राप्ते तुलान्तस्थशलाकायां च' इति **मेदिनीहैमकेदाराः** । मन्दं च तत् भागः श्रीसमूहः सोऽस्या अस्तीति **मन्दभागिनी** । तदिदं कोकप्रीत्यादि**मुरारि**प्रयोगवद्दूषनीयम् । एवमतिशयेन वत्सलस्य प्रसन्नस्य । एवं प्रिये जानकि इत्या-

१ 'समन्तु' क–घ–च.

लस्स एव्वंवादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सम् । अहं एदस्स हिअअं जाणामि ममावि एसो । (क)

**रामः**—( सर्वतोऽवलोक्य सनिर्वेदम् । ) हा न किंचिदत्र ।

**सीता**—भअवदि तमसे तहा णिक्कारणपरिच्चाइणो वि एदस्स एव्वंविधेण दंसणेण केरिसी[3] मे हिअआवत्था । (ख)

**तमसा**—जानामि वत्से जानामि ।

**तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-**
**द्वियोगे दीर्घेऽस्मिञ्झटिति घटनात्[4]स्तम्भितमिव ।**
**प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं**
**द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥ १३ ॥**

---

( क ) आर्यपुत्र असदृशं[1] खल्वेतदस्य वृत्तान्तस्य । अथवा किमिति वज्रमयी जन्मान्तरे[2]ष्वपि पुनरसम्भावितदुर्लभदर्शनस्य मामेव मन्दभागिनीमुद्दिश्य वत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भविष्यामि । अहमेतस्य हृदयं जानामि ममाप्येषः ।

(ख) भगवति तमसे तथा निष्कारणपरित्यागिनोऽप्येतस्यैवंविधेन दर्शनेन कीदृशी मे हृदयावस्था ।

---

दिप्रेमपुरस्सरमिति यावत् । **निरनुक्रोशा** निर्दया । ममेति हृदयं जानातीत्यर्थः । अत्र षष्ठ्यर्थे बहवः प्रांशुतरश्रीप्रहर्तुकाममुधागर्वखर्वतृतीयवाच्यायन्ते इति दिक् ॥ भगवति तदा निष्कारणपरित्यागिनोऽपि नामैतस्य एवंविधेन दर्शनेन कीदृशी मे हृदयावस्था । '**नाम** प्रसिद्धौ खेदादौ' इति **जयः** । **एवंविधेन** निष्फलेनेत्यर्थः । अवस्थां वर्णयति ॥ **तटस्थं नैराश्यादिति** ॥ १३ ॥ **नैराश्यात्** निराशत्वात् । **तटस्थं** उदासीनम् । **विप्रियं** परित्यागः । तद्वशात् । **कलुषं** आविलम् । **झटिति** सहसा । **घटनात्** निष्फलसंबन्धादपि । **स्तम्भितं** संजातस्तम्भम् । ' स्तम्भो जडीभावे' इति नन्ददधि ( ? । ) तस्य रामस्य । करुणरसैः । **गाढकरुणं** भृशदयम् । **क्षणे** कालविशेषे । द्रवीभूत-

---

१ 'एतद्वचनम्' क—घ—व. २ 'जन्मान्तरे संभावित°' व. ३ 'कीदिसो विअ मे हिअआणुबन्धोत्ति ण आणामि' ( कीदृश इव मे हृदयानुबन्ध इति न जानामि ) क—व—घ. ४ 'घटनोत्तम्भितमिव' व—घ.

**रामः**—देवि

**प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः ।**
**अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनी ॥ १४ ॥**

**सीता**—एदे क्खु ते अगाधमाणसदंसिदसिणेहसंभारा आणन्दणिस्सन्दिणो सुहामआ अज्जउत्तस्स उल्लावा । जाणं पच्चएण णिक्कालणपरिच्चाअसल्लिदोवि बहुमदो मह जम्मलाहो । (क)

**रामः**—अथवा कुतः प्रियतमा । नूनं सङ्कल्पाभ्यासपाटवोपादान एष रामभद्रस्य भ्रमः ।

( नेपथ्ये )

अहो महान्प्रमादः प्रमादः । ( 'सीतादेव्याः स्वकरकलितैः' इत्यर्धं पठ्यते । )

**रामः**—( सकरुणौत्सुक्यम् । ) किं तस्य ।

---

( क ) एते खलु तेऽगाधमानसदर्शितस्नेहसम्भारा आनन्दनिष्यन्दिनः सुधामया आर्यपुत्रस्योल्लापाः । येषां प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मम जन्मलाभः ।

---

मिव । हृदयं एकं सदपि परित्यागान्नानावस्थं वर्तत इति भावः ॥ १३ ॥ **प्रसाद इव मूर्त इति** ॥ १४ ॥ **मूर्तः** मूर्तिमान् । **स्नेहार्द्रे**त्यत्र सन्धिसङ्कटं घट्टनात् स्तम्भित इव क्षन्तव्यम् । **आनन्दयति** तोषयति । **नन्दिनी**ति कवेरचातुर्यम् । तथापि नन्दयतीति धातुबलादवान्तरभेदः ऊह्यः । **नन्दिनी** प्रथमैकवचनम् । नन्दिनी त्वं पुनः क्वासि इत्यर्थः । पुनश्शब्दो वाक्यालङ्कारे । नन्दिनि इति सम्बोधनं इति केचित् । तन्न । देवीति सम्बोधनस्यैव प्राबल्यात् ॥ १४॥ एते खलु ते अगाधमानसदर्शितस्नेहसम्भवा आनन्दनिष्यन्दिनः सुधामया आर्यपुत्रस्यालापाः । येषां प्रत्ययेन निष्कारणपरित्यागशल्यतोऽपि बहुमतो जन्मलाभः । **सम्भवः** उत्पत्तिः **शल्यतः** शल्यादपि । तथा च ईदृशशल्यनिवारणाय शरीरपातोऽस्तु, एतादृशप्रियंवदनाथोपभोगाय पुनर्जन्मलाभोऽस्त्विति सीताया भाव इति बोध्यम् ॥ **सङ्कल्पस्यावभासे** भासने यत् **पाटवं** सामर्थ्यं तदेव **उपादानं** साधकतमं यस्य, ' करणं साधकतमोपादाने' इति विक्रमार्कः । उपादानमिति ध्वनिः ।

---

१ 'अद्याप्येवार्द्रयति' व–घ. २ 'नन्दिनि' क–घ–न–व. ३ 'अगाधदंसिद' क–घ–व. ४ 'पाटवोत्पादितः' घ; 'पाटवोत्पादः' व.

( पुनर्नेपथ्ये । )

( 'वध्वा सार्धं' इत्युत्तरार्धं पठ्यते । )

**सीता**—को दाणिं अहिउज्जिस्सदि । (क)

**रामः**—कासौ कासौ दुरात्मा यः प्रियायाः पुत्रकं वधूद्वितीयमभिभवति । ( इत्युत्तिष्ठति । )

( प्रविश्य संभ्रान्ता । )

**वासन्ती**—कथं देवो रघुनन्दनः ।

**सीता**—कहं पिअसही मे वासन्ती । (ख)

**वासन्ती**—जयतु जयतु देवः ।

**रामः**—( निरूप्य । ) कथं देव्याः प्रियसखी वासन्ती ।

**वासन्ती**—देव त्वर्यतां त्वर्यताम् । इतो जटायुशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य सम्भावयतु देव्याः पुत्रकं देवः ।

**सीता**—हा ताद जडाओ सुण्णं तुए विणा इदं जणट्ठाणम् । (ग)

**रामः**—अहह हृदयमर्मच्छिदः खल्वमी कथोद्धाताः ।

**वासन्ती**—इत इतो देवः ।

---

( क ) क इदानीमभियोक्ष्यते ।

( ख ) कथं प्रियसखी मे वासन्ती ।

( ग ) हा तात जटायो शून्यं त्वया विनेदं जनस्थानम् ।

---

**विभ्रमः** सीतासम्बन्धरूपो विलास इत्यर्थः ॥ 'प्रमादोऽनवधानता' इत्यमरः । क इदानीमभिभविष्यति । कथं प्रियसखी मे वासन्ती । **जटायुरि**त्युदन्तोऽपि शब्दः 'जटायुस्तु जटायुवत्' इति **लिङ्गनिर्णयः** । हा तात जटायो शून्यं त्वया जनस्थानम् । मर्म विध्यन्ति **मर्माविधः** । 'उपोद्घात उदाहारः' इति, **उद्घात** इति पाठे 'उद्घात आरम्भः' इति चामरः ॥ भगवति सर्वथा वनदेवता अपि मां न द्रक्ष्यन्ति । **ऐश्वर्यं** वनदेवतामाहात्म्यमिति यावत् । **मन्दाकिन्याः** भागीरथ्याः 'गङ्गा मन्दाकिनी भागीरथी च वियदापगा' इति रत्नमाला ।

---

१ 'अभिजुज्जइ' ( अभियुज्यते ) न. २ 'देव त्वर्यतां त्वर्यताम्' इति न ३ 'जटायुशिखरिदक्षिणेन' व; 'जटायुगिरि°' घ.

**सीता**—भअवदि सच्चं एव्व वणदेवदा वि मं न पेक्खन्दि। (क)

**तमसा**—अयि वत्से सर्वदेवताभ्यः प्रकृष्टतममैश्वर्यं मन्दाकिनीदेव्यास्तत्किमित्याशङ्कसे ।

**सीता**—तदो अणुसरह्म । ( इति परिक्रामति । ) (ख)

**रामः**—भगवति गोदावरि नमस्ते ।

**वासन्ती**—( निरूप्य । ) देव मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण ।

**रामः**—विजयतामायुष्मान् ।

**सीता**—अह्महे ईदिसो मे पुत्तओ संवुत्तो । (ग)

**रामः**—हा देवि दिष्ट्या वर्धसे ।

**येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण**
**व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णमूलात्[1] ।**
**सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता**
**यत्कल्याणं वयसि तरुणे भाजनं तस्य जातः ॥ १५ ॥**

**सीता**—अविउत्तो दाणिं अअं दीहाऊ इमाए सोम्मदंसणाए होदु । ( घ )

---

( क ) भगवति सत्यमेव वनदेवता अपि मां न प्रेक्षन्ते ।
( ख ) ततोऽनुसरावः ।
( ग ) अहो ईदृशो मे पुत्रकः संवृत्तः ।
( घ ) अवियुक्त इदानीमयं दीर्घायुरनया सौम्यदर्शनया भवतु ।

---

ततोऽनुसरावः । अह्महे ईदृशो मे पुत्रकस्संवृत्तः ॥ **येनोद्गच्छदिति** ॥ १५ ॥ **उद्गच्छत्** उदयच्च तत् **बिसं** मृणालं तदेव **किसलयम्**, तद्वत् **स्निग्धो** मसृणः **दन्ताङ्कुरः** यस्य । किसलयमिति पदं बहिर्मासृण्यमात्रसूचकम् । **लवली** 'राय आवंळी' इति **महाराष्ट्राः** । **कर्णमूलात्** श्रवसोरादिभागात् । ध्वनिश्च । **तस्य** कल्याणस्य करिण्यनुवर्तनादिरूपस्य इत्यर्थः ॥१५॥ अयि पुत्र इदानीं दीर्घायुरनया सौम्यदर्शनया करिण्या सह भवतु । अयीति वासन्तीं प्रति संबोधनम् ।

---

१ 'कर्णपूरात्' ब–घ.

**रामः**—सखि वासन्ति पश्य पश्य कान्तानुवृत्तिचातुर्यमपि शिक्षितं वत्सेन ।

**लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः[1]**
**पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।**
**सेकः शीकरिणा करेण विहितः कामं विरामे पुन-**
**र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं[2] धृतम् ॥ १६ ॥**

**सीता**—भअवदि तमसे अयं दाव ईरिसो जादो । दे उण ण आणामि कुसलवा एत्तिएण कालेण केरिसा संवुत्तेत्ति । (क)

**तमसा**—यादृशोऽयं तादृशौ तावपि ।

**सीता**—ईरिसी अहं मन्दभाइणी जाए ण केवलं णिस्सहो अज्जउत्तविरहो पुत्रविरहो वि । (ख)

**तमसा**—भवितव्यतेयमीदृशी ।

**सीता**—किंवा मए पसूदाए जेण तारिसंपि मह पुत्तआणं ईसिविरलकोमलधवलदसणुज्जलकपोलं[3] अणुबद्धमुद्धकाअलीविहसिदं णिब-

(क) भगवति तमसे अयं तावदीदृशो जातः। तौ पुनर्न जानामि कुशलवावेतावता कालेन कीदृशौ संवृत्ताविति ।

(ख) ईदृश्यहं मन्दभागिनी यस्या न केवलं निःसह आर्यपुत्रविरहः पुत्रविरहोऽपि ।

---

**वत्सेन** करिपुत्रकेण ॥ **लीलोत्खातमृणाले**ति ॥ १६ ॥ **यत्** यस्मात्कारणात् । **छेदेषु** भङ्गेषु । कवलार्धरूपदानविभागेषु इति यावत् । 'छेदो विभजने भङ्गव्यययोः' इति **मकुटः** । **पुष्यच्च** तत् **पुष्करे** हस्ताग्रे **वासितं** संजातवासम् । **कामं** यथेप्सितम् । **विरामे** विश्रान्तिविषये 'विश्रान्तौ च विरामे' इति **नन्दी** । **अनरालं** अवक्रम् ॥१६॥ भगवति तमसे अयं तावदीदृशो जातः । तौ पुनर्न जानामि एतावता कालेन कीदृशौ संवृत्ताविति । ईदृश्यस्मि मन्दाकिनि (मन्दभागिनी ?) यस्या न केवलं निस्सह आर्यपुत्रविरहः, पुत्रविरहश्च । किं वा मया प्रसूतया यस्या मम पुत्रयोस्तादृशमीषद्विरलकुड्मलितधवलदर्शनोज्ज्वलितलोचनमनुबद्धमुग्धकाकलीहसितनिल्योज्ज्वलं मुखपुण्डरीकं न चुम्बितमार्यपुत्रेण । **विरलं** यथा तथा **कुड्मलिते** प्रसादसूचको धवलशब्दः । 'प्रसादे तु दृगच्छता' इति **समयपद्धतिः** । **काकलीयुक्तविहसित**मिति विवेकः । 'काकली तु

---

१ 'सम्पातिताः' घ. २ 'लीलातपत्रम्' घ. ३ 'दसणकुम्हलुज्जलं' ( दशनकुड्मलोज्ज्वलं ) न.

द्धकाकसिहण्डअं अमलमुहपुण्डरीअजुअलं ण परिचुम्बिअं अज्जउत्तेण । (क)

**तमसा**—अस्तु देवताप्रसादात् ।

**सीता**—भअवदि तमसे एदिणा अवच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी दाणिं[1] वच्चाणं पिदुणो संणिहाणेण खणमेत्तं संसारिणीह्मि संवुत्ता । ( ख )

**तमसा**—किमत्रोच्यते । प्रसवः खलु प्रकर्ष[2]पर्यन्तः स्नेहस्य । परं चैतदन्योन्यसंश्लेषणं पित्रोः ।

> **अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।**
> **आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते[3] ॥ १७ ॥**

---

(क) किं वा मया प्रसूतया येन तादृशमपि मम पुत्रकयोरीषद्विरलकोमलधवलदशनोज्ज्वलकपोलमनुबद्धमुग्धकाकलीविहसितं निबद्धकाकशिखण्डकममलमुखपुण्डरीकयुमलं न परिचुम्बितमार्यपुत्रेण ।

( ख ) भगवति तमसे एतेनापत्यसंस्मरणेनोच्छ्वसितप्रस्नुतस्तनी इदानीं वत्सयोः पितुः संनिधानेन क्षणमात्रं संसारिण्यस्मि संवृत्ता ।

---

कले सूक्ष्मे ध्वनौ' इत्यमरः । 'मुखस्य दर्पणाब्जेन्दुपुण्डरीकादयः' इति **शृङ्गारमञ्जरी** । **अस्तु** इति चुम्बितमित्यनेनानुषङ्गः । भगवति तमसे एतेनापत्यसंस्मरणेन उच्छ्वासितप्रस्नुतस्तनी इदानीं वत्सपितुस्सन्निधानेन क्षणमात्रं संसारिण्यस्मि संवृत्ता । **उच्छ्वसितं** उद्धतं **प्रस्नुतं** स्रवः ययोस्तादृशौ **स्तनौ** यस्याः । **वत्सयोः** कुशलवयोः । **पितुः** निजभर्तुः रामस्येत्यर्थः । एतेन कविना निजं द्राविडत्वमाविष्कृतमिति बोध्यम् । **खणे**ति कवेः प्रमादः । छणेति साधुः । क्षणस्य अक्ष्यादिगणे पठितत्वात् । **प्रसवः** सन्तानः । **स्नेहस्य** प्रेम्णः । **प्रकर्षः** उत्कर्षः । **पर्यन्तः** अवधिः यस्य । **एतदि**ति प्रसव इत्यभिधेयं अपत्यमित्यर्थः । **परं** उत्कृष्टं वक्तुमशक्यमिति भावः । **पित्रोः संश्लेषणं** सुरतात्मकं उपगूहनमिति यावत् ॥ तदेव विशिनष्टि— ॥ **अन्तःकरणतत्त्वस्ये**ति ॥ १७ ॥ **दम्पत्योः** तरुणस्त्रीपुरुषयोः । **अन्तःकरण**मिति **यत्तत्त्वं** इन्द्रियं तस्य **स्नेहेन** प्रेम्णा सह **संश्रयात्** संमेलनाद्धेतोः । **अयमनुभवसिद्धः** । **आनन्दस्य ग्रन्थिः** बीजं तस्य रेकः रेचनं तदेवापत्यमित्यर्थः । तथा च दम्प-

---

१ 'ताणं अ' क-च; 'ताणं च' घ. २ 'प्रकृष्ट' न. ३ 'पठ्यते' न.

**वासन्ती**—इतोऽपि देवः पश्यतु ।

अनुदिवसमवर्धयत् प्रिया ते
यमचिरनिर्गतमुग्धलोलबर्हम् ।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥ १८ ॥

**सीता**—( सकौतुकस्नेहास्रम् । ) एसो सो एसो सो ( क )

**रामः**—मोदस्व वत्स मोदस्व ।

**सीता**—एव्वं होदु । ( ख )

**रामः**—

भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः-
प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥ १९ ॥

हन्त तिर्यञ्चोऽपि परिचयमनुरुध्यन्ते ।

---

( क ) एष स एष सः ।
( ख ) एवं भवतु ।

---

त्योरन्तःकरणप्रेमपूर्वसंभोगस्खलितः आनन्दरस एवापत्यमिति भावः । 'तत्त्वं तु ब्रह्मणि इन्द्रिये' इति, 'ग्रन्थिः । पर्वणि बीजे च' इति, 'उत्सर्गो रेकरेचने' इति **हारावलीकपिलविक्रमार्काः** ॥१७॥ **अनुदिवसमवर्धयद्**िति ॥ १८ ॥ **यं** शिखण्डिनम् । यमेति ध्वनिः । मकुटेति भ्रान्तः पाठः । 'अमकुटादिषु' इति प्राकृतव्याकरणे **वररुचि**शासनात् मुकुटेति साधुः । शिखावला **कदम्बे** नीपवृक्षे ॥ **एष स वत्से**ति मयूरं प्रति संबोधनम् ॥ **भ्रमिषु कृतपुटे**ति ॥ १९ ॥ **भ्रमिषु** भ्रमणेषु । **कृतपुटान्तः** नेत्रकोशान्तरे यासां **मण्डलानां** मण्डलाकारेङ्गितानाम् । **आवृत्तिः** पौनःपुन्यं तादृशं यच्चक्षुः नेत्रं तेन सह **प्रचलिता** कम्पिता या **चटुला** चतुरा **भ्रूः** तस्याः **ताण्डवैः** इङ्गितरूपैः नर्तनैः करणेन । एकपदमेतत् । **त्वां मण्डयन्त्या** भूषयन्त्या । आवृत्तीति चक्षुरिति च पदद्वयं विशेषणविशेष्यरूपं कर्म । ताण्डवैर्मण्डयन्त्येति वार्थः ॥ **अनुरुध्यन्ते** अनुवर्तन्ते । यमेतिध्वनिः । सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण ।

---

१ 'अतरुणमदताण्डवोत्सवान्तेष्वयमचिरोद्गतमुग्धलोलबर्हः' **घ–व.** २ 'वृत्तचक्षुः' **घ**; 'मण्डलावृत्ति चक्षुः' **व.**

**कतिपयकुसुमोद्गमः कदम्बः**
**प्रियतमया परिवर्धितोऽयमासीत्[1] ।**

**सीता**—(निरूप्य सास्रम् ।) सुट्ठु पच्चहिआणिदं अज्जउत्तेण । (क)

**रामः**—

**स्मरति गिरिमयूर एष देव्याः**
**स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥**

**वासन्ती**—अत्र तावदासनपरिग्रहं करोतु देवः ।

( राम उपविशति । )

**वासन्ती**—

**नीरन्ध्रबालकदलीवनमध्यवर्ति**
**कान्तासखस्य शयनीयशिलातलं ते[2] ।**
**अत्र स्थिता तृणमदाद्बहुशो यदेभ्यः[3]**
**सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥**

**रामः**—इदं तावदशक्यमेव द्रष्टुम् । ( इत्यन्यतो रुदन्नुपविशति । )

**सीता**—सहि वासन्दि किं तुए किदं अज्जउत्तस्स मह अ एदं दंसअन्तीए । हद्धी हद्धी । सो एव्व अज्जउत्तो तं एव्व पञ्चवटीवणं सा एव्व पिअसही वासन्दी दे एव्व विविहविस्सम्भसक्खिणो गोदावरीकाणणुद्देसा दे एव्व जादणिव्विसेसा मिअपक्खिपाअवा सा

( क ) सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण ।

**देव्याः** इतीदं मातुः स्मरतीतिवदुपपन्नम् ॥ **कतिपयकुसुमे**ति ॥ २० ॥ **यतः** यस्मात् ॥२०॥ **नीरन्ध्रबाले**ति ॥ २१ ॥ प्रथमचरणमेकपदम् । 'मृगाद्या वनगोचराः' इति कपिलः । **ततः** अनन्तरम् । **हरिणकैः** बालहरिणैः । **न विमुच्यते स्म** न विमुक्ता ॥२१॥ वासन्ति किं त्वया कृतं आर्यपुत्राय ममैतद्दर्शयन्त्या । हा धिक् हा धिक्, स एवार्यपुत्रः, तदेव पञ्चवटीवनम्, सैव प्रियसखी वासन्ती, त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः, त एव जातनिर्विशेषा मृगपक्षिणः । मम पुनर्मन्दभागिन्याः दृश्यमानमपि सर्वमेवैतन्नास्ति । ईदृशो जीवलोकस्य परिणामस्संवृत्तः । **एतत्** शिलातलमित्यर्थः । **जातः**

१ 'य आसीत्' घ—व. २ 'एतत्तदेव कदली०' क—घ—व. ३ 'वनगोचरेभ्यः' न—टी.

ज्जेव्व चाहम् । मह उण मन्दभाइणीए दीसन्तं वि सव्वं एव्व एदं णत्थि त्ति सा ईरिसो जीअलोअस्स परिणामो[1] संवुत्तो । (क)

**वासन्ती**—सखि सीते कथं न पश्यसि रामभद्रस्यावस्थाम् ।

नवकुवलय[2]स्निग्धैरङ्गैर्ददन्नयनोत्सवं
सततमपि नः[4] स्वेच्छादृश्यो नवो नव एव यः[5] ।
विकलकरणः पाण्डुच्छायः[6] शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ २२ ॥

**सीता**—पेक्खामि सहि पेक्खामि । (ख)

**तमसा**—पश्यन्ती[7] प्रियं भूयाः ।

**सीता**—हा देव्व एसो मए विणा अहं वि एदेण विणेत्ति सिविणेपि केण संभाविदं आसि । ता मुहुत्तमेत्तं जम्मन्तरादो विअ

---

(क) सखि वासन्ति किं त्वया कृतमार्यपुत्रस्य मम चैतद्दर्शयन्त्या । हा धिक् हा धिक् । स एवार्यपुत्रस्तदेव पञ्चवटीवनं सैव प्रियसखी वासन्ती त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशास्त एव जातनिर्विशेषा मृगपक्षिपादपाः सैव चाहम् । मम पुनर्मन्दभाग्याया दृश्यमानमपि सर्वमेवैतन्नास्तीति तदीदृशो जीवलोकस्य परिणामः संवृत्तः ।

(ख) प्रेक्षे सखि प्रेक्षे ।

---

**निर्विशेषः** अस्मत्साधारण्यं येषु । निर्भया इति भावः ॥ **नवकुवलय** इति ॥ २२ ॥ **ददत्** वितरन् । ददन् इति कोऽपि बभ्राम । **विकलानि** अयथाभूतानि **करणानि** इन्द्रियाणि यस्य । **परि** अन्तर्बहिश्च । **तथापि** स्वभावादिति शेषः ॥२२॥ पश्यामि सखि पश्यामि । प्रियं पश्यन्ती भूयाः इत्यन्वयः । हा दैव एष मया विना अहमपि एतेन विनेति स्वप्नेऽपि केन संभावितमासीत् । तस्मान्मुहूर्तमपि जन्मान्तरतोऽपि अविस्मरणीयदर्शनं बाष्पसलिलान्तरेषु पश्यामि तावद्वत्सलमार्यपुत्रम् । **केन संभावितं न** केनापीत्येकोऽर्थः । **केन**

---

१ 'परिवत्तो' ( परिवर्तः ) क–घ–व. २ 'कुवलयदल' क–घ–व. ३ 'ददौ' व–घ. ४ 'ते' व–घ. ५ 'नवं नवमेव यः' व–घ. ६ 'पाण्डुः सोयं' व–घ. ७ 'पश्य प्रियं भूयः' न.

लद्धदंसणं बाह्सलिलन्तरेसु पेक्खामि दाव वच्छलं अज्जउत्तम् । ( इति पश्यन्ती स्थिता । ) ( क )

**तमसा**—( परिष्वज्य सास्रम् । )

विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती पक्ष्मलोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलमधुरमुग्धा दुग्धकुल्येव दृष्टिः ॥ २३ ॥

**वासन्ती**—

ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

**रामः**—एहि सखि वासन्ति नन्वितः स्थीयताम् ।

**वासन्ती**—( उपविश्य सास्रम् । ) महाराज अपि कुशलं कुमार-लक्ष्मणस्य ।

---

( क ) हा दैव एष मया विना अहमप्येतेन विनेति स्वप्नेपि केन सम्भावितमासीत् । तन्मुहूर्तमात्रं जन्मान्तरादिव लब्धदर्शनं बाष्पसलिलान्तरेषु प्रेक्षे तावद्वत्सलमार्यपुत्रम् ।

---

ब्रह्मणा **संभावित**मित्यन्योऽर्थः । 'को ब्रह्मा' इत्येकाक्षरः । **सलिलानामन्तरेषु** अनुत्पत्तिदशासु । 'अन्तरं प्रागभावादौ' इति संसारावर्तः ॥ **विलुलितमतिपूरै**रिति ॥ २३ ॥ **विलुलितं** विशेषेण तरलितम् । **आनन्दशोकाभ्यां** दर्शनपरित्यागजन्मभ्यामित्यर्थः । **पक्ष्मला** पक्ष्मनिबिडा **उत्ताना** चासौ **दीर्घा** । 'निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये' इत्यमरः । **हृदयेशं** रामम् । '**मधुर**श्चटुलः' इति रत्नमाला । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः ॥२३॥ **ददतु तरवः पुष्पै**रिति ॥ २४ ॥ **मधूनि च्युतानि** एभ्यस्तैः **फलैः** । 'अर्घ्यंपुष्पफलादिभिः' इति स्मृतेः । **आमोदानां** परिमलानां **प्रायो** भूमा येषु । **अविरलं** सान्द्रम् । **रज्यत्कण्ठाः** । **कलं** मधुरास्फुटं यथा तथा

---

१ 'अणुलद्धदंसणा' घ; 'दुल्लहलद्ध०' न. २ 'तृष्णयोत्तान' व–घ. ३ 'बहल' घ–व. ४ 'रत्युत्कण्ठाः' व–घ.

**रामः**—( अश्रुतिर्मभिनीय । )

**करकमलवितीर्णैरम्बुनीवारशष्पै-**
**स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।**
**भवति मम विकारस्तेषु दृष्टेषु कोपि**
**द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ २५ ॥**

**वासन्ती**—महाराज ननु पृच्छामि अपि कुशलं कुमारलक्ष्मणस्येति ।

**रामः**—( आत्मगतम् । ) अये महाराजेति निष्प्रणयमामन्त्रणपदं सौमित्रिमात्रे च बाष्पस्खलिताक्षरः कुशलप्रश्नः । तथा मन्ये विदित-सीतावृत्तान्तेयमिति । ( प्रकाशम् । ) आं कुशलं कुमारस्य ।

**वासन्ती**—( रुदती । ) अयि देव [3] किं परं दारुणः खल्वसि ।

**सीता**—सहि वासन्दि किं तुमं एव्वंवादिणी होसि । पिआरुहो क्खु सव्वस्स अज्जउत्तो विसेसदो मह पिअसहीए । (क)

**वासन्ती**—

**त्वं जीवितं त्वमसि मे हृदयं द्वितीयं**
**त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।**

---

( **क** ) सखि वासन्ति किं त्वमेवंवादिनी भवसि । प्रियार्हः खलु सर्वस्यार्य-पुत्रो विशेषतो मम प्रियसख्याः ।

---

**क्वणन्तु** ॥२४॥ **करकमलवितीर्णै**रिति ॥ २५ ॥ **अम्बुभिः तरुशकुनीन्** वृक्षविहङ्गान् । **नीवाराः** तृणधान्यानि । तेषां **शष्पैः** बालतृणैः **कुरङ्गान्** इति क्रमालङ्कारः । शष्पैरिति ध्वनिरप्यकिञ्चित्कर इति भावः । अत एव–' गङ्गाप्रपातान्तनिरूढशष्पम्' इति **ईश्वरकृष्णमिश्रः** । **विकारः** ममता । **प्रस्रवः** इत्युपचारः । **उद्भेदः** उदयः ॥२५॥ अपरमिति ध्वनिः॥ सखि वासन्ति किमिति त्वमेवंवादिनी । पूजार्हः खलु सर्वस्यार्यपुत्रः, विशेषतः पुनर्मम प्रियसख्याः ॥ **त्वं जीवितं त्वमसी**ति ॥ २६ ॥ **जीवितं** जीवः । **द्वितीयं** त्रीरूपकम् । **कौमुदी** आनन्दयित्री । **अमृतं** अमरत्वसाधनम् । 'वपुष्यवयवे त्वङ्गम्' इति

---

१ 'अनाकर्णनम्' न. २ 'प्रस्रवोद्भेद' न. ३ 'किमिति' व; ' किमिति दारुणो दारुणः' घ. ४ 'पूआरुहो' ( पूजार्हः ) न.

**इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां**
**तामेव शान्तमथवा किमिहोत्तरेण[1] ॥ २६ ॥**

( इति मुह्यति । )

**तमसा**—स्थाने[2] वाक्यनिवृत्तिर्मोहश्च ।

**रामः**—सखि समाश्वसिहि समाश्वसिहि ।

**वासन्ती**—( समाश्वस्य । ) तत्किमिदमकार्यमनुष्ठितं देवेन ।

**सीता**—सहि वासन्दि विरम विरम । ( क )

**रामः**—लोको न मृष्यतीति ।

**वासन्ती**—कस्य[3] हेतोः ।

**रामः**—स एव जानाति किमपि ।

**तमसा**—चिरादुपालम्भः[4] ।

**वासन्ती**—

**अयि कठोर यशः किल ते प्रियं**
**किमयशो ननु घोरमतः परम् ।**
**किमभवद्विपिने हरिणीदृशः**
**कथय नाथ कथं बत मन्यसे ॥ २७ ॥**

---

( क ) सखि वासन्ति विरम विरम ।

---

**नन्दी** । अत्र त्वङ्कारत्रयमधिकम् । **मुग्धां** मूढां च **तामेव** त्यक्तवानसीति भावः ॥ २६ ॥ **स्थाने** युक्तम् । **निवृत्तिः** कुण्ठनम् । चतुर्थचरणं पूरयति—**शान्तमिति** । गतमित्यर्थः । **अतः** त्यागादपि । **अन्याय्यं** न्यायादपेतम् । सखि वासन्ति विरम विरम । **कस्य हेतोः** केन हेतुनेत्यर्थः । 'विस्मृतं कस्य हेतोः' इति **मुद्राराक्षसः** । लज्जावशात् **किमपीत्युक्तम्** ॥ **अयि कठोर यश** इति ॥ २७ ॥ **कठोर** इति संबोधनम् । **अतः** पत्नीत्यागात् । किं चरितमिति शेषः ॥ २७ ॥ त्वमेव सखि वासन्ति दारुणा कठोरा च या एवं विप्रलपन्ती पर्याप्तं विप्रलापयसि । विप्रलापवन्तं करोषीति यावत् । अभ्यउक्तं इति शेषः ।

---

१ 'किमतः परेण' न. २ 'स्थाने...मोहश्च' इत्येतद्रामवाक्यमिति **व–घ.** ३ 'तत्कस्य' **घ–व.** ४ 'उचितस्तदुपा°' **घ–व.**

**सीता**—तुमं एव्व सहि वासन्दि दारुणा कठोरा अ जा एव्वं अज्जउत्तं पलित्तं[1] पदीवेसि । (क)

**तमसा**—प्रणय एवं व्याहरति शोकश्च ।

**रामः**—सखि किमत्र मन्तव्यम् ।

**त्रस्तैकहायनकुरङ्गविलोलदृष्टे-**
**स्तस्याः परिस्फुरितगर्भभरालसायाः ।**
**ज्योत्स्नामयीव मृदुबालमृणालकल्पा[2]**
**क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥ २८ ॥**

**सीता**—अज्जउत्त धरामि एसा धरामि । (ख)

**रामः**—हा प्रिये जानकि क्वासि ।

**सीता**—हद्धी हद्धी । अण्णो विअ अज्जउत्तो पमुक्ककण्ठं रोइदि (ग)

**तमसा**—वत्से सांप्रतिकमेवैतत् । कर्तव्यानि खलु दुःखितैर्दुःखनिर्वापणानि[3] ।

---

(क) त्वमेव सखि वासन्ति दारुणा कठोरा च यैवमार्यपुत्रं प्रदीप्तं प्रदीपयसि ।
(ख) आर्यपुत्र ध्रिये एषा ध्रिये ।
(ग) हा धिक् हा धिक् । अन्य इवार्यपुत्रः प्रमुक्तकण्ठं रोदिति ।

---

आर्यपुत्रमित्यर्थः । विप्रलापो विरोधोक्तिः, पर्याप्तं यथेप्सितम् ॥ **त्रस्तैकहायनेति** ॥ २८ ॥ **एकहायनः** । एकवत्सर इत्यर्थः । तृतीयचरणेन विरहपाण्डिमा । **क्रव्याद्भिः** राक्षसैः । विशेषेण लुप्ता ॥२८॥ धरामि आर्यपुत्र धरामि । जीवामीत्यर्थः । 'द्वौ मासावहह धरामि दिने दिने' इति **बोधायनरामायणे** ॥ हाधिक् हाधिक् अन्य इवार्यपुत्रः प्रमुक्तकण्ठं प्ररुदितः । प्रकृष्टं अधिकं रुदितं अस्य । अन्य इवार्यपुत्र इति ध्वनिः । सांप्रतं इदानीम् । तत्संबन्धि **सांप्रतिकं** योग्यमिति वाऽर्थः । 'त्रिषु सांप्रतिकं योग्यं' इति विक्रमार्कः । एतत् प्ररुदितम् ।

---

१ 'पलवन्तं पलावेसि' ( प्रलपन्तं प्रलापयसि ) न. २ 'मुग्ध' व—घ. ३ 'निर्धारणानि' न.

**पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।**
**शोकक्षोभे च हृदयं प्रलापैरेव धार्यते[1] ॥ २९ ॥**

विशेषतो रामभद्रस्य[2] बहु[3]प्रकारकष्टो जीवलोकः ।

**इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा**
**प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति[4] ।**
**स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-**
**स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥**

**रामः**—कष्टं भोः कष्टम् ।

**दलति हृदयं गाढोद्वेगं[5] द्विधा तु न भिद्यते**
**वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।**
**ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-**
**त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३१ ॥**

सीता—एव्वं ण्णेदं । (क)

---

(क) एवं न्विदम् ।

---

**निर्वापणानि** प्रमार्जनानि ॥ **पूरोत्पीडे तटाकस्येति** ॥ २९ ॥ **पूरैः उत्पीडे** उत्पीडने सति **परीवाहः** जलनिर्गमः । **शोकेन क्षोभे** सतीत्यर्थः । 'प्रलापोऽनर्थकं वचः' इत्यमरः ॥२९॥ **बहुप्रकारं कष्टं** यस्मिन् सः **जीवलोकः** मर्त्यभुवनम् ॥ तदेवोपपादयति—**इदं विश्वं पाल्यमिति** ॥ ३० ॥ **विश्वं** जगत् । **विधिवत्** यथाराजधर्मम् । **पाल्यं** रामेणेति शेषः । **अभियुक्तेन** अभितः युक्तेन न्यायकरणात् । उचितेनेत्यर्थः । **जीवं** असुधारणम् । रामस्येत्यनुषङ्गः । **त्यागं** तव सीताया इति बोध्यम् । **असुलभ** इति स्वस्यैव अनर्थमूलकत्वादिति भावः । **तत्** तस्मात् । **उच्छ्वास** इति दुःखातिशयतः । 'श्वासो महानुच्छ्वासः' **इत्यमरशेषः** ॥ उच्छ्वासोऽस्तु रुदिते किं फलमत आह—**नन्विति** । **रुदितं लाभो हि** । तथा च रुदिते कृते दुःखस्य न्यूनतैव लाभो हि इति भावः ॥३०॥ **भो** इति मनः प्रति संबोधनम् ॥ **दलति हृदयमिति** ॥३१॥ 'दलति स्फुटति' इति **माठरः** । **उद्वेगः** तीव्रता । **विकलं** अयथाभूतम् । **मोहं** मूर्च्छाम् । **चेतनां** ज्ञप्तिम् । **अन्तर्दाहः** अबाह्यसन्तापः । **तनुं भस्मसात्** भस्माधीनम् **न करोति** । **विधिः** दैवम् । **जीवितं** जीवम् । अत्र **तुशब्दः**

---

१ 'अवधार्यते' **न.** २ 'रामभद्रस्य यस्य' **क.** ३ 'बहुतर°' **क–घ–व.** ४ 'क्लमयति' **घ–व.** ५ 'शोकोद्वेगात्' **न;** 'गाढोद्वेगः' **टी.**

**रामः**—हे भवन्तः पौरजानपदाः ।

**न किल भवतां देव्याः स्थानं गृहेऽभिमतं तत-**
**स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता ।**
**चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मा-**
**मिदमशरणैरद्यास्माभिः प्रसीदत रुद्यते ॥ ३२ ॥**

**वासन्ती**—( स्वगतम् । ) अतिगम्भीरमापूरणं मन्युसम्भारस्य । ( प्रकाशम् । ) देव अतिक्रान्ते धैर्यमवलम्ब्यताम् ।

**रामः**—सखि किमुच्यते धैर्यमिति ।

**देव्या शून्यस्य जगतो द्वादशः परिवत्सरः ।**
**प्रनष्टमिव नामापि न च रामो न जीवति ॥ ३३ ॥**

**सीता**—मोहिदम्हि एदेहिं अज्जउत्तवअणेहिं । (क)

**तमसा**—एवमेव वत्से ।

**नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः ।**
**एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि ॥ ३४ ॥**

( **क** ) मोहितास्म्येतैरार्यपुत्रवचनैः ।

पादपूरणे ॥३१॥ **एवमेतत्** सत्यमिति भावः॥ **न किल भवता**मिति ॥३२॥ **स्थानं** वासः । **ततः** तस्मात् । **नातिशोचिता** किञ्चिच्छोचितेति यावत् । अपिस्संभावनायाम् । पूरणे इति केचित् । **ते ते** विविधाः । '**भावाः** शृङ्गारजाः क्रियाः' इति **वामनः** । **परि** परितः **द्रवयन्ति** आर्द्रीकुर्वन्तीति यावत् । **अस्माभिरिदमिति** भवद्भिः श्रूयमाणं यथातथेत्यर्थः । प्रसिद्धमिति केचित् । वक्ष्यमाणमित्यन्ये । **रुद्यते प्रसीदत** रोदनाय किल भवद्भिरेवमपवादो निर्मित इति भावः ॥ ३२ ॥ **मन्युसंभारस्य** दैन्यसामग्र्याः । **आपूरणं** पूर्तिः । **अतिक्रान्ते** गते सतीत्यर्थः । कार्ये इति शेषः ॥ **देव्या शून्यस्येति** ॥ ३३ ॥ 'संवत्सरो वत्सरश्च परिवत्सरः' इति द्विरूपः । **नाम** देव्या इति शेषः । नामास्या इति वा पाठः । **रामो न जीवतीति न** जीवत्येवेत्यर्थः । चकारः पूरणे । नैष इति वा पाठः ॥ ३३ ॥ मोहितेवार्यपुत्रस्य प्रियवचनैः ॥ **नैताः प्रियतमा** इति ॥ ३४ ॥ शोकदारुणतया **नैताः प्रियतमाः** । अत्र भङ्ग्यन्तरेण निदर्शनमाह-**एता** इति । यद्यपि **मधुनो धाराः** । तथापि **सविषाः श्च्योतन्ति** गलन्तीत्यर्थः ॥ ३४ ॥ धैर्यमवलम्बितमेव मयेत्याह—

१ 'तथा द्रवयन्ति' न; 'परिभ्रमयन्ति' व. २ 'अद्याप्येवं' व–घ. ३ 'अवगूरणं शोकसागरस्य' व–घ; 'मन्युभारस्य' न. ४ 'लुप्तं सीतेति' व.

**रामः**—अयि वासन्ति मया खलु

यथा तिरश्चीनमलातशल्यं
　　प्रत्युप्तमन्तः सविषश्च दंशः[१]।
तथैव तीव्रो हृदि शोकशङ्कु-
　　र्मर्माणि कृन्तन्नपि किं न सोढः ॥ ३५ ॥

**सीता**—एव्वं म्हि मन्दभाइणी पुणोवि आआसआरिणी अज्जउत्तस्स। (क)

**रामः**—एवमति[२]निष्कम्पस्तम्भितान्तःकरणस्यापि मम संस्तुतत[३]त्प्रियवस्तुदर्शनाद्[४]दुद्दामोयमावेगः। तथाहि।

वे[५]लोल्लोलक्षुभितक[६]रुणोज्जृम्भणस्तम्भनार्थं
　　यो यो यत्नः कथमपि मया [७]धीयते तं तमन्तः।
[८]भित्वा भित्वा प्रसरति बलात्कोऽपि चेतोविकार-
　　स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ ३६ ॥

---

(क) एवमस्मि मन्दभागिनी पुनरप्यायासकारिणी आर्यपुत्रस्य।

---

**यथा तिरश्चीन**मिति ॥३५॥ **सविषः** विषेण सहितः अग्रदेशो यस्य तत्। सविषाग्रदेशः। तिर्यग्भवं **तिरश्चीनम्**। **अलातशल्यं** अलाताग्निसंबन्धलोहाग्रं यथा **अन्तः** आत्मनि **प्रत्युप्तम्**। अत्र सविषत्वं तिरश्चीनत्वमलाताग्निसंबन्धश्च बाधातिशयद्योतनायोक्त इति सूक्ष्मदृष्टिभिरूह्यम्। **तथैव हृदि तीव्रः** तीक्ष्णः **न सोढः किं** सोढ एवेत्यर्थः ॥३५॥ एवमस्मि मन्दभागिनी। अहं पुनः पुनः आयासकारिण्यार्यपुत्रस्य। **संस्तुताः** परिचिताश्च ते वर्गाः वृक्षादीनां वर्गाः। 'संस्तवः स्यात्परिचयः' इत्यमरः। 'संस्तुताः नुताः' इति कोपि बभ्राम ॥ **वेलोल्लोलेति** ॥ ३६ ॥ हेलया लीलया। **करणानां** इन्द्रियाणाम्। **प्रतिहतः** विहतः **रयः** वेगः यस्य सः। तोयस्येति जातावेकवचनम्। **ओघः** प्रवाहः ॥३६॥ आर्यपुत्रस्य एतेन दुर्वारदारुणारम्भेण दुःखसंक्षोभेण प्रमुषितनिज-

---

१ 'दन्तः' न. २ 'अतिगूढ' न. ३ 'संस्तुतबहुतर' घ; 'संस्तुतप्रियवस्तु०' न. ४ 'अद्यायमावेगः' न–व. ५ 'लोलोल्लोल' क–घ–व; 'हेलोल्लोल' टी. ६ 'करणो०' व–टी. ७ 'समाधीयते' न. ८ 'हित्वा हित्वा' न.

**सीता**—एदिणा अज्जउत्तस्स दुव्वारदारुणारम्भेण दुःखसंखोएण परिमुसिअणिअदुक्खं किंपि पमुद्धं मे हिअअं । (क)

**वासन्ती**—(स्वगतम् ।) कष्टमभ्यापन्नो[1] देवः । तदन्यतः क्षिपामि तावत् । ( प्रकाशम् । ) चिरपरिचितानिदानीं जनस्थानभागानवलोकनेन मानयतु देवः ।

**रामः**—एवमस्तु । ( इत्युत्थाय परिक्रामति । )

**सीता**—संदीवणो[2] एव्व दुःखस्स पिअसहीए[3] विणोदणोवाओ त्ति तक्केमि । (ख)

**वासन्ती**—( सकरुणम् । ) देव देव

**अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः**
**सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते ।**
**आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया**
**कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥३७॥**

**सीता**—दालुणासि वासन्ति दालुणासि । जा एदेहिं हिअअमम्मगूढसल्लसंघट्टनेहिं[4] पुणो पुणोवि मं मन्दभाइणिं अज्जउत्तं अ संदावेसि । (ग)

---

( क ) एतेनार्यपुत्रस्य दुर्वारदारुणारम्भेण दुःखसंक्षोभेण परिमुषितनिजदुःखं किमपि प्रमुग्धं मे हृदयम् ।

( ख ) संदीपन एव दुःखस्य प्रियसख्या विनोदनोपाय इति तर्कयामि ।

( ग ) दारुणासि वासन्ति दारुणासि । या एतैर्हृदयमर्मगूढशल्यसंघट्टनैः पुनःपुनरपि मां मन्दभागिनीमार्यपुत्रं च सन्तापयसि ।

---

दुःखमपि किमपि प्रमुग्धमिव मे हृदयम् । **किमपि** अनिर्वचनीयम् । प्रकर्षेण मुग्धं मूढम् । **अत्यासक्तः** अत्युत्कण्ठितः । कष्टमत्यां कृच्छ्रबुद्धौ आसक्तश्च । **आभोगः** परिपूर्णता । सन्दीपनमेव दुःखस्य प्रियसख्या विनोदनोपाय इति मन्त्रये ॥ **अस्मिन्नेव लतागृहे** इति ॥ ३७ ॥ 'विमनायितः स्याद्दुर्मनायितः' इति **नन्दी** । **अञ्जलिरिति** कथनं **कवेश्चातुर्यम्** । वेश्याजनक्रियमाणोऽयं

---

१ 'अत्यासक्तः' **न–टी.** २ 'सन्दीवणाइं' (सन्दीपनानि) **व–घ.** ३ 'पिअसही विणोद...त्ति मण्णेदि' (प्रियसखी विनोदनोपाय इति मन्यते) **व–घ.** ४ 'मम्मुग्घाडिअसल्ल' **न** ( मर्मोद्घाटितशल्य ).

**रामः**—अयि चण्डि जानकि इतस्ततो दृश्यस इव[1] नानुकम्पसे ।

हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरल[2]ज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ३८ ॥

( इति मूर्च्छति । )

**सीता**—हद्धी हद्धी पुणोवि पमूढो अज्जउत्तो । (क)

**वासन्ती**—देव समाश्वसिहि समाश्वसिहि ।

**सीता**—अज्जउत्त मं मन्दभाइणिं उद्दिसिअ सअलजीवलोअम[3]ङ्गलाधारस्स दे वारंवारं संसइदजीविअदालुणो दशापरिणामो त्ति हा हदम्हि । ( इति मूर्च्छति । ) ( ख )

---

( क ) हा धिक् हा धिक् पुनरपि प्रमूढ आर्यपुत्रः ।

( ख ) आर्यपुत्र मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारस्य ते वारंवारं संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि ।

---

विलासः । न तु कुलाङ्गनानां संप्रदायः । कदाचिदपराधे सति सत्यः पादपीडनमेवारचयन्तितराम्, इत्युच्चैश्शिरसः। अलौकिकवैदिकघण्टापथमन्थ(?)विशेषज्ञाः प्रमाणम् ॥३७॥ या एतैर्हृदयमर्मगूढशल्यघट्टनैः पुनः पुनरपि मां मन्दभागिनीमार्यपुत्राय स्मरयति ॥ **हा हा देवि स्फुटती**ति ॥ ३८ ॥ **हाहे**ति वीप्सायाम् । **देह**शब्देनाङ्गानि लक्ष्यन्ते । तेषां **बन्धः** परस्परसंबन्धः । **ध्वंसते** ध्वस्तो भवति । **अविरलज्वालं** यथा तथा । 'मनस्यात्मनि चान्तः स्यात्' इति रत्नमाला । **तमसि** भ्रमे । **अन्धे** गाढे सति । **सीदन्** क्लिश्यमानः । **विधुरो** दीनः' इति **शब्दार्णवः** । **आत्मा** देहः 'धृतिर्देहं त्रिष्वात्मा' इति हलायुधः । **अन्तः** मनसि । अन्तः पश्यामीति **दीक्षिताः** । **मोहः** मूर्च्छा । **विष्वक्** अभितः । **स्थगयति** कुण्ठयतीति केदारः । मामिति शेषः । 'किमित्यर्थेऽपि च कथं' इति शब्दमाला ॥३८॥ हा धिक् हा धिक् पुनरपि प्रमूढ आर्यपुत्रः। आर्यपुत्र मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमङ्गलाधारजन्मलाभस्य ते संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि । **संशयितं** सञ्जातसंशयं **जीवितं** यस्मिन् दशापरिणामे । स चासौ **दारुणः** । **दशा** अवस्था ।

---

१ 'दृश्यसे नानु०' न; 'दृश्यसे एव' घ. २ 'अविरत' व–घ. ३ 'मङ्गलिअजम्मलाहस्स' ( मंगल्यजन्मलाभस्य ) न; 'मङ्गलाधारजन्मलाभस्य' टी.

**तमसा**—वत्से समाश्वसिहि समाश्वसिहि । पुनस्त्वत्पाणिस्पर्श एव सञ्जीवनोपायो रामभद्रस्य ।

**वासन्ती**—कथमद्यापि नोच्छ्वसिति । हा प्रियसखि सीते क्कासि सम्भावयात्मनो जीवितेश्वरम् ।

( सीताससंभ्रममुपसृत्य हृदि ललाटे च स्पृशति । )

**वासन्ती**—दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः ।

**रामः**—

**आलिम्पन्नमृतमयैरिव प्रलेपै-**
**रन्तर्वा बहिरपि वा शरीरधातून् ।**
**संस्पर्शः पुनरपि जीवयन्नकस्मा-**
**दानन्दादपरमिवादधाति मोहम् ॥ ३९ ॥**

( आनन्दनिमीलिताक्ष एव ) सखि वासन्ति दिष्ट्या वर्धसे ।

**वासन्ती**—देव कथमिव ।

**रामः**—सखि किमन्यत् । पुनः प्राप्ता जानकी ।

**वासन्ती**—अयि देव रामभद्र क्क सा ।

**रामः**—( स्पर्शसुखमभिनीय । ) पश्य नन्वियं पुरत एव ।

**वासन्ती**—अयि देव किमिति मर्मच्छेददारुणैरेभिः प्रलापैः प्रियसखीदुःखदग्धामपि मां पुनर्मन्दभाग्यां दहसि ।

---

**जीवितेश्वरं** भर्तारम् । ध्वनिश्च । ' जीवितेशः प्रिये यमे' इत्यमरः ॥ **आलिम्पन्नि**ति ॥ ३९ ॥ **आ** समन्तात् **प्र**कृष्टाश्च ते **लेपाः**। वाशब्दश्चार्थः । ' इवार्थचार्थयोर्वा स्यात्' इति **कपिलः** । अपिरेकः वाकारश्च पुनरुक्तौ । शरीरधातूंश्चेत्यर्थः । 'श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः । **सः** पूर्वं कृतः । प्रसिद्धो वा । ' अकस्मात् सहार्थे ( सहसार्थे ? ) स्यात्' इति **कपिलः**। 'अकस्मात्' इति **महाराष्ट्राः**। **आनन्दा**द्धेतोः । न विद्यते परः यस्मात् **अपरः** तं **मोहं** पारवश्यम् 'मोहो मूर्च्छापारवश्यतमोमौढ्यभ्रमादिषु' इत्य**गस्त्यः** । अकस्मात्

---

१ 'अपरविधं तनोति' **क–घ–व.**

**सीता**—ओसरिदुं इच्छम्मि। एसो उण चिरसं[1]भावसोम्मसीअलेण अज्जउत्तप्फरिसेण दीहदारुणं वि झत्ति संदावं हरन्[2]तेण वज्जलेवोवै[3]णिवद्धो विअ सिज्जन्तणीसहविपल्हत्थो वेअणसीलो अवसो विअ मे हत्थो। (क)

**रामः**—सखि कुतः प्रलापाः।

**गृहीतो यः पूर्वं परिणयविधौ कङ्कणधरः**
**सुधासूतेः पादैरमृतशिशिरैर्यः परिचितः।**

**सीता**—अज्जउत्त सो एव्व दाणिं सि तुमम्। (ख)

---

(क) अपसर्तुमिच्छामि। एष पुनः चिरसद्भावसौम्यशीतलेन आर्यपुत्रस्पर्शेन दीर्घदारुणमपि झटिति सन्तापं हरता वज्रलेपोपनिबद्ध इव स्विद्यन्निःसहविपर्यस्तो वेपनशीलोऽवश इव मे हस्तः।

(ख) आर्यपुत्र स एवेदानीमसि त्वम्।

---

अहेतुकादानन्दादिति केचित्। तन्न। स्पर्शस्यैव मुख्यहेतुत्वात्॥३९॥ इतोऽपसरणं कर्तुमिच्छामि। एष पुनश्चिरप्रणयस्वभावसौम्यशीतलेन आर्यपुत्रस्पर्शेन दीर्घदारुणमपि झटिति सन्तापमुल्लाघयता वज्रलेपोपनद्ध इव स्विद्यत्स्वेदनिस्सहो विप्रलब्धवेविरः अवसज्जितो मे हस्तः। आर्यपुत्रविषये स्पर्शेन **वज्रलेपेन उपनद्धः** बद्ध इव स्थितः। वज्रलेपेति कथनमतिदार्ढ्यसूचनाय। **स्वेदः निस्सहः** दुस्सहः येन। स्विद्यदित्यत्र 'त्यथ्यां चछजा' इति जत्वम्। बहुकालातिपाताद्**विप्रलब्धो** वञ्चितश्चासौ **वेविरः** सात्त्विकभावात् कम्पनशील इत्यर्थः। देशीयोऽयं शब्दः। **अवसज्जितः** सज्जीकृतः। प्रेमवशादिति भावः। अवेत्युपसर्गो लक्षणया अवधानवाचकः॥ **गृहीतो यः पूर्वमिति**॥४०॥ धरतीति धरः **कङ्कणस्य धरः**। सुधानां सूतिर्यस्मात्। चन्द्रस्य **पादैः** किरणैः। **अमृतं** जलम्। तद्वत् **शिशिरैः** शीतैः। 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इति **ईश्वरकृष्णमिश्रः**। 'पयः कीलालममृतम्' इति। 'अमृतं जलं' इति च अमरनन्दिनौ। **परिचितः** कृतपरिचयः इत्यर्थः। एतेन पाणिस्सञ्जी-

---

१ 'चिरप्पणअसंभारसोम्म' (चिरप्रणयसंभारसौम्य) न; 'चिरप्रणयस्वभाव°' टी. २ 'उल्लाहअन्तेण' (उल्लाघयता) न–टी. ३ 'लेवोवणद्धो (लेपोपनद्धः) न–टी. ४ 'स्विद्यत्स्वेदनिःसहः' टी. ५ 'चिरं स्वेच्छास्पर्शैः' क–घ–च.

**रामः**—

स एवायं तस्यास्तुहिनिकरौपम्यसुभगो
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ ४० ॥

( इति गृह्णाति । )

**सीता**—हद्धी हद्धी । अज्जउत्तप्फरिसमोहिदाए पमादो क्खु मे संवुत्तो । ( क )

**रामः**—सखि वासन्ति आनन्दनिमीलितेन्द्रियः साध्वसेन परवानस्मि । तत्त्वं तावदेनां धारय ।

**वासन्ती**—कष्टमुन्माद एव ।

( सीता ससंभ्रमं हस्तमाक्षिप्यापसर्पति । )

**रामः**—हा धिक् प्रमादः ।

करपल्लवः स तस्याः सहसैव जडो जडात्परिभ्रष्टः ।
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥ ४१ ॥

**सीता**—हद्धी हद्धी । अज्जवि अणवत्थिदत्थिमिदमूढघुण्णन्तणअणो ण पज्जवत्थावेदि अत्ताणअं । ( ख )

---

(क) हा धिक् हा धिक् । आर्यपुत्रस्पर्शमोहितायाः प्रमादः खलु मे संवृत्तः ।

(ख) हा धिक् हा धिक् । अद्याप्यनवस्थितस्तिमितमूढघूर्णन्नयनो न पर्यवस्थापयत्यात्मानम् ।

---

वन इति व्यज्यते । आर्यपुत्र स एवेदानीमसि त्वम् । **तदितरेति**—तस्याः सीतायाः, इतरः स्पर्शकारणात्पाणेरन्यः । तस्य करस्य । **औपम्येन** दृष्टान्तेन **सुभगः** मनोहरः । ' स्यादौपम्यं तु दृष्टान्तः ' इति **शाश्वतः** । 'अनौपम्यां रम्याम्' इति **भगवत्पादाः** । अत्र तस्या इति कथने उभयत्र चारितार्थ्यात् पुनस्तदितरेति कथनं कवेरचातुर्यरूपकः प्रमादः । '**कन्दलः** कन्दगोलः' इति **कपिलः** । **तस्याः पाणिः मया लब्धः** अद्येति शेषः॥४०॥ हा धिक् आर्यपुत्रस्पर्शमोहितायाः प्रमादः संवृत्तः । ' खेदो हासश्च कम्पादिः साध्वसं नेत्रमीलनम् । जल्पाकत्वं तथानन्दस्फूर्तिरुन्मादजाः क्रियाः ॥' इति **काव्यदीपिकायाम्** । **उन्मादश्चित्तविभ्रमः** । **करेति** ॥४१॥ **जडः** शिशिरः ॥४१॥ हा धिक् अनवस्थितस्तिमितघूर्णमानमविरलवेदनं न पर्यवस्थापयाम्यात्मानम् । **स्तिमितः** निश्चलः ।

---

१ 'तदितरकरौपम्य' न–टी.

**तमसा**—( सस्नेहकौतुकस्मितं निर्वर्ण्य । )

**सस्वेदरोमाञ्चितकम्पिताङ्गी**
**जाता प्रियस्पर्शसुखेन वत्सा ।**
**मरुन्नवाम्भःप्रविधूतसिक्ता**
**कदम्बयष्टिः स्फुटकोरकेव ॥ ४२ ॥**

**सीता**—( स्वगतम् । ) अम्हहे अवसेन एदेण अत्ताणएण लज्जाविदम्हि भअवदीए तमसाए । किं त्ति किल एसा मण्णिस्सदि एसो परिच्चाओ एसो अहिसङ्गो त्ति । ( क )

**रामः**—( सर्वतोऽवलोक्य । ) हा कथं नास्त्येव । नन्वकरुणे वैदेहि ।

**सीता**—सच्चं अकरुणम्हि जा एव्वंविहं तुमं पेक्खन्दी जीवेमि एव । ( ख )

---

( क ) अह्महे अवशेनैतेनात्मना लज्जापितास्मि भगवत्या तमसया । किमिति किलैषा मंस्यत एष परित्याग एषोऽभिषङ्ग इति ।

( ख ) सत्यमकरुणास्मि यैवंविधं त्वां प्रेक्षमाणा जीवाम्येव ।

---

**निर्वर्ण्य** दृष्ट्वा ॥ **सस्वेदरोमाञ्चिते**ति ॥४२॥ **मरुता** पवनेन **प्रविधूता नवाम्भसा सिक्ते**ति क्रमः । व्यर्थोऽपि प्रशब्दः पादपूरकः । **कदम्बयष्टिः** नीपशाखा । 'विचकार कोरकाणि' इति **माघ**प्रयोगात् **स्फुटानि कोरकाणि यस्या इति केचित्** । तन्न, यथा जलधरपटल इत्यादिवत् कोरकाणीत्यसाधुः कोरकाः पाटलानीत्येव साधुः । अत एव 'कोरकः पुमान्' इति, 'समूहे पटलं न ना' इति च विविधव्याख्याजटिलनामलिङ्गानुशासनो भगवत्पादानुगृहीतकृति**रमरसिंहो**ऽभाणीत् ॥ ४२ ॥ अह्महे अवशं गतेनात्मनाऽनेन लज्जापितास्मि । किमेषा ज्ञास्यति । एष परिवादः एषोऽभिषङ्ग इति । **अह्महे** खेदादिषु । **अवशं** पाराधीन्यम् । **लज्जापिता** लज्जां प्रापिता । एष ममेत्यर्थः । मुणिस्सदीत्यत्र 'ज्ञो मुण' इति मुणादेशः । **परिवादः** अपवादः । 'अभिषङ्गः अभिनिवेशः' इति **धरणिः** । अकरुणतरास्मि या एवंविधमपि त्वां पश्यन्ती जीवाम्येव । पश्यन्त्येव जीवामीति च चमत्कारः ॥ अयि आर्यपुत्र

---

१ 'मुणिस्सदि' (ज्ञास्यति ) टी. २ 'परिवादः' टी.

**रामः**—क्वासि देवि प्रसीद । न मामेवंविधं परित्यक्तुमर्हसि ।

**सीता**—अयि अज्जउत्त विप्पदीवं विअ एदम् । ( क )

**वासन्ती**—देव प्रसीद प्रसीद । स्वेनैव लोकोत्तरेण धैर्येण संस्तम्भयातिभूमिं गतमात्मानम् । कुतोत्र मे प्रियसखी ।

**रामः**—व्यक्तं नास्त्येव कथमन्यथा वासन्त्यपि तां न पश्येत् । अपि खलु स्वप्न एष स्यात् । न चास्मि सुप्तः । कुतो रामस्य निद्रा । सर्वथा स एवैष भगवाननेकवारपरिकल्पनानिर्मितो विप्रलम्भः पुनः पुनरनुबध्नाति माम् ।

**सीता**—मए एव्व दारुणाए विप्पलद्धो अज्जउत्तो । ( ख )

**वासन्ती**—देव पश्य पश्य

**पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथ-**
**स्ते चैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः ।**

( क ) अयि आर्यपुत्र विप्रतीपमिवैतत् ।

( ख ) मयैव दारुणया विप्रलब्ध आर्यपुत्रः ।

विप्रतीपमिवैतत् । **एतत्** प्रेमेति शेषः । विशेषेण प्रतीपं प्रतिकूलम् । तथा च परित्यागे कृते एवं पुनः प्रेमानुसरणमनुचितमिति भावः । **अतिभूमिं** मर्यादापरपारमिति यावत् । **प्रियसखी** सीता । **अन्यथा** सा यदि स्यात् **कथं न पश्येदि**ति योज्यम् । **सर्वथा** प्रकारेण । **अनेकवारं** असकृत् **परिकल्पनानि** संकल्पविकल्पादीनि यस्मिन् सः । 'विप्रलम्भस्तु वञ्चना' इति **नामार्णवः** । विप्रलम्भस्य **भगवा**निति विशेषणं माहात्म्यापादकम् । अत एव 'भगवति निद्रे दयस्व'इति **भट्टाचार्याः** । विप्रलम्भः शृङ्गारविशेषः इति केचित् । विप्रयोग इत्यन्ये । उभे अपि शशशृङ्गे ॥ 'मए एव्वं विप्पलद्धो' इत्युत्तरवाक्यविरोधात् । मयैव दारुणया एवं विप्रलब्ध आर्यपुत्रः । **विप्रलब्धः** वञ्चितः पाणिस्पर्शमात्रेणेति भावः । 'विप्रलब्धस्तु वञ्चितः' इत्यमरः ॥ अन्यतो दर्शयन्ती मनो विनोदयति-**देवे**ति ॥ **पौलस्त्यस्य जटायुषे**ति ॥ ४३ ॥ **पौलस्त्यस्य** रावणस्य । कृष्णायोमयः **कार्ष्णायसः** कृष्णायस्सम्बन्धी वा । कृष्णं नीलं च तत् अयः लोहः तद्विकार इति वा । कार्ष्णायस इति कथनं दार्ढ्यातिशयसूचकम् । पिशाचानामिव वदनानि येषां ते । **कङ्कालैः** शरीरास्थिभिः । **शेषाः**

१ 'विवरीदं' ( विपरीतं ) क-घ-व. २ '°भूमिगतविप्रलम्भम्' क-घ-व.
३ 'पश्यैते' व-घ.

खड्गच्छिन्नजटायुपक्षतिरितः सीतां चलन्तीं[1] वह-
न्नन्तर्व्यापृत[2]विद्युदम्बुद इव द्यामभ्युदस्थादरिः ॥ ४३ ॥

**सीता**—( सभयम् ) अज्जउत्त तादो वावादीअदि अहं वि अवहरिज्जामि । ता परित्ताहि । ( क )

**रामः**—( सावेगमुत्थाय ) आः पाप तातप्राणसीतापहारिन् क यासि ।

**वासन्ती**—अयि देव राक्षसकुलप्रलयधूमकेतो किमद्यापि[3] ते मन्युविषयः ।

**सीता**—अम्हो अहं वि उब्भन्तम्हि । ( ख )

**रामः**—अन्य[4] एवायमधुना विपर्ययो वर्तते ।

उपायानां भावादविरत[5]विनोदव्यतिकरै[6]-
र्विमर्दैर्वीराणां जगति[7] जनितात्यद्भुतरसः ।

---

( क ) आर्यपुत्र तातो व्यापाद्यते अहमप्यपह्रिये । तस्मात्परित्रायस्व ।

( ख ) अहो अहमप्युद्भ्रान्तास्मि ।

---

अतितरां कृशा इति यावत् । अत एव नलेन तावदेत एव बलिन इति परीक्ष्य ऋतुपर्णस्य रथे कृशतरा वाजिनः योजिता इति **महाभारते** । **खराः** वेगादिषु तुरङ्गाधिकाः । 'खच्चर' इति **महाराष्ट्राः** । **जटायोः पक्षतिः** पक्षमूलम् । 'जटायुवत्पङ्क्तिरथो न धन्यः' इति **बोधायनरामायणे** । **चलन्तीं** कम्पमानाम् । **अन्तः** स्वात्मनि । **व्यापृता** स्फुरन्ती **विद्युत्** यस्य । **द्यां** आकाशम् । **अरिः** रावणः ॥ ४३ ॥ हा आर्यपुत्र तातो व्यापाद्यते । **तातो** जटायुः । **व्यापाद्यते** हन्यते । अहमपि अवहरिज्जामि अपह्रिये । अपहृता भवामीत्यर्थः । परित्रायस्व । परित्रायस्व । आवेगः संभ्रमातिशयः । **प्रलये** नाशे । **धूमकेतुः** उत्पातविशेषः । **ते** तव **मन्योः** कोपस्य **विषयः** गोचरः । अरिरित्यनुषज्यते । अहो उद्भ्रान्तास्मि । **विपर्ययः** व्यत्यासः ॥ **उपायानां भावादिति** ॥ ४४ ॥ **उपायानां** सामादीनां चतुर्णाम् । **भावात् अविरतं** सन्ततम् **विनोदव्यतिकराः** कौतुकव्यापाराः येषु । 'विनोदः कौतुके हास्ये' इति, 'व्यापारे मुदि सम्बन्धे योगे व्यतिकरे' इति **नामार्णवशब्दा-**

---

१ 'ज्वलन्तीं' व-घ. २ 'अन्तर्व्याकुल' क-घ-व. ३ 'अद्यापि' व-घ. ४ 'अन्वर्थ एवायमधुना प्रलापो वर्तते' व-घ. ५ 'अविरल' न. ६ 'व्यतिकर' व. ७ 'जनितजगदत्यद्भुत' न.

वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कथं[1] तूष्णीं सह्यो निरवधिरयं[2] त्वप्रतिविधः ॥ ४४ ॥

**सीता**—णिरवधित्ति हा हदम्हि मन्दभाइणी । ( क )

**रामः**—हा कष्टम् ।

व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतो[3]ऽपि यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये[4] तत्र प्रिये क्वासि मे ॥ ४५ ॥

**सीता**—बहुमॅणाविदम्हि तं पुव्वविरहं[5] । ( ख )

**रामः**—सखि वासन्ति दुःखायैव सुहृदामिदानीं रामस्य दर्शनम् । कियच्चिरं त्वां रोदयिष्यामि । तदनुजानीहि मां गमनाय ।

**सीता**—( सोद्वेगमोहं तमसामाश्लिष्य ) भअवदि तमसे गच्छदि दाणिं अज्जउत्तो । ( इति मूर्च्छति ) ( ग )

---

( क ) निरवधिरिति हा हतास्मि मन्दभागिनी ।

( ख ) बहुमानितास्मि तं पूर्वविरहम् ।

( ग ) भगवति तमसे गच्छतीदानीमार्यपुत्रः ।

---

र्गवौ । **विमर्दैः** संग्रामैः । **रिपुघातः अवधिः** अवसानं यस्य । 'वृथार्थेऽपि तूष्णीम्' इति **रभसः** । 'परित्यागवियोगान्तघाताः प्रविलयास्तु ताः' इति **केदारः** ॥ ४४ ॥ निरवधिरिति हा हतास्मि । पूर्ववियोगापेक्षया आधुनिकवियोगस्य वैलक्षण्यमाह ॥ **व्यर्थं यत्र कपीन्द्रे**ति ॥ ४५ ॥ यच्छब्दत्रयेण प्रविलयः परामृश्यते । **अविषये** अगोचरे । **तत्र** तस्मिन् **प्रविलये** इति शेषः । यत्रेति पञ्चधा वक्तव्ये त्रिधा कथनं प्रक्रमभङ्गः । 'न स्थातुं न पलायितुं चलितुं नोन्मीलितुं नो हातुं निजजीवितं प्रभवति' इति **लीलाधर**प्रयोग इव अनुग्राह्यः । केचिदविषये इति पाठमाश्रित्य य इत्यध्याहारमुररीचक्रुः । तत् कुररीक्रन्दितमिव परिहास्यम् । यत्रेति प्रायपाठः, प्रतीतस्य प्रातिकूल्यात् । अपित्रयमधिकम् ॥ ४५ ॥ बहुमानितास्मि पूर्वविरहं, उद्दिश्येत्यर्थः । **उद्वेगो** भयसंभ्रमः ॥ हा भगवति तमसे गच्छतीदानीमार्यपुत्रः ।

---

१ 'कष्टः' न. २ 'तु प्रविलयः' न; 'निरवधिरिदानीं तु विरहः' घ. ३ 'जाम्बवतो न यत्र' न. ४ 'अविषयः' घ. ५ 'बहुमाणिदम्हि पुव्वविरहे' न.

**तमसा**—वत्से समाश्वसिहि। समाश्वसिहि। नन्वावामायुष्मतोः कुशलवयोर्वर्षवर्धनमङ्गलानि[1] सम्पादयितुं भागीरथीपदान्तिकमेव गच्छावः।

**सीता**—भअवदि पसीद। खणमेत्तं वि दाव दुल्लहदंसणं जणं पेक्खामि। (क)

**रामः**—अस्ति चेदानीमश्वमेधाय सहधर्मचारिणी मे।

**सीता**—( सोत्कम्पम् ) अज्जउत्त का। (ख)

**रामः**—हिरण्मयी सीताप्रतिकृतिः।

**सीता**—( सोच्छ्वासास्रम्। ) अज्जउत्तो दाणिं सि तुमम्। अह्महे उक्खाणिदं दाणिं मे परिच्चाअलज्जासल्लं अज्जउत्तेण। ( ग )

**रामः**—तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि।

**सीता**—धण्णा खु सा जा एव्वं अज्जउत्तेण बहुमण्णीअदि जा अ अज्जउत्तं विणोदयन्दी आसाणिबन्धणं जादा जीअलोअस्स। ( घ )

---

( क ) भगवति प्रसीद। क्षणमात्रमपि तावद्दुर्लभदर्शनं जनं प्रेक्षे।

( ख ) आर्यपुत्र का।

( ग ) आर्यपुत्र इदानीमसि त्वम्। अहो उत्खातमिदानीं मे परित्यागलज्जाशल्यमार्यपुत्रेण।

( घ ) धन्या खलु सा यैवमार्यपुत्रेण बहु मन्यते या चार्यपुत्रं विनोदयन्त्याशानिबन्धनं जाता जीवलोकस्य।

---

**वर्षवर्धनं** अम्बुपूर्तिः। भगवति प्रसीद। क्षणं तावद्दुर्लभदर्शनमार्यपुत्रं पश्यामि। छणमिति पाठस्साधुः। दुर्लभेति ध्वनिः। आर्यपुत्र का। आर्यपुत्र इदानीमसि त्वम्। अह्महे उत्खातमिदानीं परित्यागलज्जाशल्यमार्यपुत्रेण। **उत्खातं** आकृष्टम्। **तत्रापि** कनकसीताप्रतिकृतावित्यर्थः। **चक्षुः** कर्म। धन्या खलु सा या एवमार्यपुत्रेण बहु मन्यते या आर्यपुत्रं विनोदयन्ती आशाबन्धनं जाता जीवलोकस्य। जीवलोकस्वरूपस्य। अथवा—गोपीकृष्णः सीताराम इत्यादौ यथा गोपीयुक्तकृष्णः सीतायुक्तराम इति समाधीयते। तथा प्रकृते जीवयुक्ताः लोकाः भुवनानि यस्मिन् तस्य **जीवलोकस्य** रामस्येत्यर्थः। जीव-

---

१ 'वर्षवृद्धिमङ्गलानि' न; 'वर्षग्रन्थिमङ्गलं' व.

**तमसा**—( सस्मितस्नेहास्रं परिष्वज्य । ) अयि वत्से एवमात्मा स्तूयते ।

**सीता**—(सलज्जमधोमुखी स्वगतम्) परिहसिदह्मि भअवदीए । (क)

**वासन्ती**—महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं प्रति यथा कार्यहानिर्न भवति तथा कार्यम् ।

**सीता**—पडिऊला दाणिं मे वासन्दी संवुत्ता । ( ख )

**तमसा**—वत्से एहि गच्छावः ।

**सीता**—( सकष्टम् ) एव्वं करम्ह । ( ग )

**तमसा**—कथं वा गम्यते । यस्यास्तव

**प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः ।**
**मर्मच्छेदोपमैर्यत्नैः संनिकर्षो निरुध्यते ॥ ४६ ॥**

---

( क ) परिहसितास्मि भगवत्या ।
( ख ) प्रतिकूलेदानीं मे वासन्ती संवृत्ता ।
( ग ) एवं कुर्वः ।

---

लोक इत्युपलक्षणम् । तथा च जीवलोकस्य रामस्य चाभेदः सिद्धः । अत एव 'विश्वं विष्णुः' इति । 'वासनाद्वासुदेवस्य' इत्यादि पौराणिका इति । **आशेति** यथा रामं विहाय आशा न निर्गच्छेत् । तथा आशाया बन्धनं जातेति भावः । **सस्मिते**ति-सीताप्रतिकृतिव्याजेन आत्मानमेव स्तौति इति स्मिताविर्भावः, रामः प्रतिकृतावप्येवमनुरक्त इति स्नेहसन्दर्भः । ईदृशयोरीदृशी दशेत्यस्रोदयः । एवमादिषु तेषु तेषु स्थलेषु ते ते हेतवः कुशाग्रबुद्धिभिरूह्याः । **आत्मेति**—त्वं सीतेति यावत् । परिहसितास्मि भगवत्या । अनुजानीहि मां गमनायेति वादिनं रामं प्रत्याह—**महानिति** । **व्यतिकरः** सन्तोषः । 'मुदि व्यतिकरः' इति नामार्णवः । **गमनं प्रति** प्रसादस्तवेति शेषः । अस्माकं महान्व्यतिकरोऽयमित्यन्वयः । **कार्ये**ति–तदेहि संभावयास्मानिति द्वितीयाङ्कपूर्तौ शम्बूकोक्त भगवदगस्त्यसन्दर्शनरूपकार्यमिति भावः । प्रतिकूला इदानीं मे वासन्ती संवृत्ता । एवं कुर्वः । गमनमिति प्रयाससाध्यमित्याह–**प्रती**ति । **दयिते** इति सीतां प्रति संबोधनचमत्कारः । वस्तुतः **दयिते** भर्तरि रामभद्रे ॥ **प्रत्युप्तस्येवे**ति ॥ ४६ ॥ **प्रत्युप्तस्येव** स्थितस्येत्यर्थः । **तृष्णा** दर्शनेच्छा **दीर्घा** यस्मिन् । तस्य चक्षुषः । **सन्निकर्षः मर्मच्छेदोपमैः** अरुन्तुदैः **यत्नैः** साहसैः । **निरुध्यते** अतिबलात्कारादितस्त्वमन्यत्र नीयसे इति भावः । चक्षुष इति

---

१ 'गमनं पुनर्यथा' क. २ 'तथास्ताम्' क–घ–व. ३ '०च्छेदपरैर्यत्नैराकर्षो न समाप्यते' क–घ–व.

**सीता**—णमो णमो अपुव्वपुण्णजणिददंसणाणं अज्जउत्तचलणकमलाणम् । ( इति मूर्च्छति ) ( क )

**तमसा**—वत्से समाश्वसिहि समाश्वसिहि ।

**सीता**—( समाश्वस्य । ) किअच्चिरं वा मेहन्तरेण पुण्णिमाचन्दस्स दंसणम् ( ख )

**तमसा**—अहो संविधानकम् ।

**एको रसः करुण एव निमित्तभेदा-**
**द्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान् ।**
**आवर्तबुद्बुदतरङ्गमयान्विकारा-**
**नम्भो यथा सलिलमेव हि तत्समस्तम् ॥ ४७ ॥**

( क ) नमो नमोऽपूर्वपुण्यजनितदर्शनाभ्यामार्यपुत्रचरणकमलाभ्याम् ।
( ख ) कियच्चिरं वा मेघान्तरेण पूर्णिमाचन्द्रस्य दर्शनम् ।

जातावेकवचनम् । 'विपुलं चक्षुषि विस्तृतं नितम्बे' इति **गौडपादाचार्याः**। 'चरणं शरणं त्वदीयं' इति **श्रीकालहस्तीश्वरशतके वरदन्तश्च** ॥४६॥ नमस्सुकृतपुण्यजनदर्शनीयाभ्यामार्यचरणाभ्याम् । **सुकृतपुण्येति** पुनरुक्तिविरोधः । सुष्ठु कृतपुण्या इति परिहारः ते च ते **जनाः** । शोभनं कर्म कृतं येन सः सुकृतः स चासौ पुण्यजनः राक्षसः बिभीषण इति यावत् । कियच्चिरं मे बाष्पान्तरेण पूर्णचन्द्रस्य दर्शनम् । अन्तरेण बाष्पस्योदयात् पूर्वक्षणरूपेण अवकाशेनेत्यर्थः । 'अन्तरमवकाशे' इत्यमरः । राममुखपूर्णचन्द्रस्य **बाष्पसङ्कटेनैव मुखे**न्दुदर्शनम्, न तु सौलभ्येनेति भावः ॥ कविस्तमसावाक्यव्याजेनात्मनैपुणं स्तुवन् नाटकविरुद्धमङ्गलेतरदैन्यभरितकरुणरसप्राधान्यदोषं दग्धन(?)क्रमेण परिहरति—**अहो** इति । अहो आश्चर्ये ॥ **एको रसः करुण** इति ॥ ४७ ॥ **निमित्तभेदात्** कारणविच्छित्तिविशेषात् । **भिन्नः** भेदितः सन् । **पृथक् पृथक्** अन्यरसात्मनेति यावत् । **विवर्तान्** विपरीतपरिणामान् **आश्रयते** भजति । 'व्यस्तपरिणामे स्याद्विवर्तः' इति **कपिलः** । अत्र करुणरस एव अन्यरसत्वेनापि परिणत इति फलितोऽर्थः । क्वचिद्द्वीपे भस्मसात्कृतवेत्रलताजालेषु स्थलेषु स्वतः कदलीवनाविर्भाव इति प्रसिद्धिः तद्वदिहाप्युन्नेयमिति कवेस्तात्पर्यम् । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । **यथा** आश्रयते इत्यध्याहारः । **समस्तं तत्** आवर्तादिकं **सलिलमेव हि** । तथा च आवर्तबुद्बुदतरङ्गाद्युपाधिभिः भिन्नं सदप्यम्भः वस्तुत एकमेव । तथा शृङ्गारादिरसोपाधिभिर्भिन्न इव दृश्यमानोऽपि

१ 'सुकिदपुण्णजणदंसणिज्जाणं' ( सुकृतपुण्यजनदर्शनीयानां ) न–टी. २ 'मे बाष्पान्तरेण' टी. ३ 'न पुण्णचन्ददंसणम्' न; 'पूर्णचन्द्रस्य दर्शनम्' टी. ४ 'इव श्रयते' न. ५ 'तु तत्समग्रम्' क–व–व.

**रामः**—अयि विमानराज इत इतः ।

( सर्वे उत्तिष्ठन्ति )

**तमसावासन्त्यौ**—(सीतारामौ प्रति । )

**अवनिरमरसिन्धुः सार्धमस्मद्विधाभिः**
**स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।**
**स च मुनिरनुयातारुन्धतीको वसिष्ठ-**
**स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय ॥ ४८ ॥**

( इति निष्क्रान्ताः सर्वे । )

**तृतीयोऽङ्कः ।**

---

करुणो रसः अन्यतस्तदभिन्नः सन् एक एवेति भावः ॥ अस्मिन् पद्ये केचिदारम्भशूराः 'ब्रह्मापि नरं न रञ्जयति' इति **भर्तृहरि**गिरां पात्रीभवन्तीति दिक् ॥४७॥ **इत इतः** आगच्छेति शेषः ॥ अथ मधुरेणैव पूरयेदिति न्यायमनुसरन् कविर्निर्णिजम् (?) इति शतसङ्कोचपरिजिहीर्षुः अन्यापदेशेन सन्दर्भमसुश्रेव कल्यां वाचमुल्लिखति—**तमसे**ति । **प्रति** उद्दिश्य । अत्र क्रमालङ्कारः ॥ **अवनिरमरसिन्धु**रिति ॥ ४८ ॥ **अवनिः** पृथिवी **अमरसिन्धुः** गङ्गा । **अस्म**च्छब्देन तमसावासन्त्यौ परामृश्येते । **सार्धं** सह । **सः कुलपतिः** । 'कुलं गृहेऽपि' इत्यमरः । गृहस्थाश्रमपालक इति यावत् । पुराणवचसा पूर्वं व्याध इति भावः । 'गृहं गृहपतिः' इति श्रुतिः । **यश्छन्दसां** मानिषादेत्यादिपद्यानाम् । **आद्यः** परः प्रयोक्तेत्यर्थः । 'आद्यो वरोऽपि' इति हैमः । आद्यः प्रथम इति केचित् । तन्न ॥ त्रेतायुगप्रवृत्ततया वाल्मीक्यपेक्षया कृतयुगकवेर्वटपत्रशायिना सह महाप्रलये चतुस्समुद्रे परिक्रीडमानस्य भगवतो यमद्रोहिमुनिडिम्भस्य 'रुद्रं पशुपतिं स्थाणुं' इति **मृत्युञ्जयस्तोत्र**रूपच्छन्दोऽवतारेषु आद्यत्वादिति प्रामाणिकविशेषज्ञाः समामनन्ति । **सः** प्रसिद्धः । अनुयाता अनुसृता अरुन्धती यं **अनुयातारुन्धतीकः** । अनुयातेति ध्वनिः । तव कृते इति शेषः । त्वयि इति वा पाठः । 'वितर वारिद वारि दवातुरे' इति **प्राभाकरमिश्राः** । **भद्रं** वेदोक्तं कल्याणम् । 'भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिः' इति श्रुतेः । **श्रेयसे** श्रेष्ठाय 'श्रेयान् श्रेष्ठः' इत्यमरः । **मङ्गलाय** उत्सवाय । 'उत्सवेऽपि च मङ्गलम्' इति **हेमचन्द्रः** । एतेन भद्रश्रेयोमङ्गलानां शब्दार्थाभ्यामैक्यात् प्रमादः कवेरिति यद्दूषणं केचिदाहुस्तत्परास्तम् । चकारः एकोऽधिकः ॥ अथवा—**श्रेयसे** सम्पत्तये । 'श्रेयस्सम्पत्तिमोक्षयोः' इति नामार्णवः । **मङ्गलाय** च इति योज्यम् । अत्र सदसदध्वगमने विशेषज्ञाः प्रमाणम् । शिष्यडिम्भः कियानित्यलमतिविस्तरेण ॥४८॥ इति महाराज०* उत्तररामचरितसंजीवनाख्यटिप्पणे तृतीयोऽङ्कः समाप्तः ॥ इति तृतीयोऽङ्कः ॥

---

१ 'तव' न. २ 'श्रेयसे' टी.

* प्रथमाङ्कटीकासमाप्तौ टीकाकृता यदात्मवृत्तं कथितं तत्सर्वमत्राप्यनुसन्धेयम्.

## चतुर्थोऽङ्कः ।

( ततः प्रविशतस्तापसौ । )

**एकः**—सौधातके दृश्यतामद्य भूयिष्ठसन्निधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य । तथाहि ।

**नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रिया-**
**पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।**
**गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः**
**कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १ ॥**

**सौधातकिः**—साअदं अणेअपिआराणं जिण्णकुच्छाणं अणज्झाअकालणाणम् । ( क )

**प्रथमः**—( विहस्य । ) अपूर्वः कोऽपि ते बहुमानहेतुर्गुरुषु सौधातके ।

---

( क ) स्वागतमनेकप्रकाराणां जीर्णकूर्चानामनध्यायकारणानाम् ।

---

अथ चतुर्थोऽङ्कः ॥ अथ तावदाशीर्वचनसन्दर्भानुरोधादरुन्धतीजनकादिप्रवेशसंलापौ निरूपयिष्यन् कविः तदङ्गभूतमितिवृत्तोपक्षेपप्रकाशकं मिश्रविष्कम्भमुपक्रमते—**तत** इति ॥ **एकः** दाण्डायनिरित्यर्थः । सुधातकस्यापत्यं **सौधातकिः** । मद्येति ध्वनिः । समधिकतरेति भ्रान्तः पाठः पुनरुक्तेः । समधिकेति अधिकतरेति च सुपाठौ । **भागो** माहात्म्यम् । **पदं** स्थानम् । तदेव वर्णयति—**नीवारौदनमिति** ॥ १ ॥ **सद्यःप्रसूतया प्रियया । पीतादभ्यधिकं** सुदुर्वारमिति यावत् । **नीवाराः** तृणधान्यानि । **तदोदनमण्डं** रसाग्रम् । 'स्वरसाग्रे मण्डम्' इत्यमरः । 'कञ्जी' इति **द्राविडाः । पर्याप्तं** यथेप्सितम् । **आचामति** पिबति । 'चूषतीति' **माठरः । मनाक्** ईषत् । **स्फुरता** स्फुटीभवता । **सर्पिष्मतः** घृताक्तस्य **भक्तस्य** अन्नस्य **गन्धेनानुसृतः** अन्वितः । **शाकानां** भक्ष्यपत्राणाम् । **पचनं** पाकः । तस्यामोदः परिमलः । '**परिस्तीर्यते** एधते' इति **श्रीनाथः** । 'कर्कन्धूर्बदरी' इति, 'गन्धः परिमलामोदौ' इति हारावलीविक्रमार्कौ ॥ 'हरिष्यामि सुधाश्शाकैः' इति **सप्तशत्याम्** ॥ १ ॥ स्वागतमनेकस्थविरेभ्यो जीर्णकू-

---

१ 'आअदं अणज्झाअकारणं सविसेसभूदं अज्ज जिण्णकुचाण्णं' (आगतमनध्यायकारणं सविशेषभूतमद्य जीर्णकूर्चानाम्) **व-घ.**

**सौधातकिः**—भो दण्डाअण[1] किंणामहेओ एसो महन्तस्स ठविरे[2]सत्थस्स धुरंधरो अज्जे[3] अदिही आअदो । ( क )

**दाण्डायनः**—धिक्प्रहसनम् । नन्वयमृष्यशृङ्गाश्रमादरुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान्वसिष्ठः प्राप्तः । तत्किमेवं प्रलपसि ।

**सौधातकिः**—हुं वसिट्ठो । ( ख )

**दाण्डायनः**—अथ किम् ।

**सौधातकिः**—मए उण जाणिदं वग्घो[4] वा विओ वा एसोत्ति । ( ग )

**दाण्डायनः**—आः किमुक्तं भवति ।

**सौधातकिः**—जेण[5] परावडिदेण एव्व सा वराई कविला क[6]ल्लाणी मडमडाइआ । ( घ )

**दाण्डायनः**—समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रि-

---

( क ) भो दाण्डायन किंनामधेय एष महतः स्थविरसार्थस्य धुरन्धरोऽद्यातिथिरागतः ।

( ख ) हुं वसिष्ठः ।

( ग ) मया पुनर्ज्ञातं व्याघ्रो वा वृको वैष इति ।

( घ ) येन परापतितेनैव सा वराकी कपिला कल्याणी मडमडायिता ।

---

येभ्योऽनध्यायकारणेभ्यः । 'शिष्टप्राप्तावनध्यायो बहूनामुत्सवस्ततः ।' इति समयपद्धतिः । ठेराणमिति देशीयश्शब्दः । 'कूर्चोऽस्त्री पुंसां चिबुककैशिके' इति संसारावर्तः । 'दाडी' इति महाराष्ट्राः । अणज्झाअ इत्यत्र 'ध्यह्योर्झः' इति झत्वम् ॥ भो दाण्डायन किन्नामधेय इदानीमेष महतः स्थविरसार्थस्य धुरन्धरोऽद्यातिथिरागतः । दण्डायनस्यापत्यं दाण्डायनिः । सार्थः सङ्घः । प्रहासं प्रकर्षेण हासम् । करोषीति शेषः । अधिष्ठायेति-दारानुद्दिश्य अधिष्ठानं नियन्तृत्वमधिगम्येति यावत् । हुं वसिष्ठः । मया पुनर्ज्ञातं व्याघ्रः कोऽप्येष इति । आः कोपे । किं प्रश्ने । येनागच्छतैव सा वराकी कपिला मडमडायिता ।

---

१ 'भण्डाअण' व–घ. २ 'इत्थिआसत्थस्स' क–न. ३ 'अज्ज चीरधारओ' व–घ. ४ 'वग्घो विअ एसोत्ति' न; 'व्याघ्रः कोप्येष इति' टी. ५ 'तेण' व–घ. ६ 'कल्लाणी बलामोडिअ' न.

यायाभ्यागताय वत्सतरीं महोक्षं वा महाजं[1] वा निर्वपन्ति[2] गृहमेधिनः[3] । तं हि धर्मं धर्मसूत्रकाराः समामनन्ति ।

**सौधातकिः**—भो णिगिहीदोसि ( क )

**दाण्डायनः**—कथमिव ।

**सौधातकिः**—जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा । अज्ज एव्व पंच्चाअदस्स[4] राएसिणो जणअस्स भअवदा वम्मीइणा दहिमहूहिं एव्व णिव्वत्तिदो महुवक्को । वच्छतरी उण विसज्जिदा । ( ख )

**दाण्डायनः**—अनिवृत्तमांसानामेवं कल्पमृषयो[5] मन्यन्ते । निवृत्तमांसस्तु तत्रभवान् जनकः ।

**सौधातकिः**—किंणिमित्तम् । ( ग )

**दाण्डायनः**—स तदैव देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः । तथास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य ।

**सौधातकिः**—तदो किंत्ति आअदो । ( घ )

---

( क ) भो निगृहीतोऽसि ।

( ख ) येनागतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता । अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः । वत्सतरी पुनर्विसर्जिता ।

( ग ) किंनिमित्तम् ।

( घ ) ततः किमित्यागतः ।

---

'वराको नीचदीनयोः' इति **नानार्थमञ्जरी** । मडमडेतिशब्दानुकारः । उपाकृतेत्यर्थः । **आम्नायं** वेदम् । भो निगृहीतोऽसि । यदागतेषु वसिष्ठमिश्रेषु एवमद्यैव प्रत्यागताय राजर्षये भगवता वाल्मीकिना दधिमधुभिरेव निर्वर्तितो मधुपर्कः । वत्सतरी पुनर्विसर्जिता । **मिश्र**शब्दः पूजायाम् ॥ 'निवृत्तमांसो

---

१ एतन्नास्ति **न**–पुस्तके. २ 'पचन्ति' **न**. ३ '०मेधिन इति हि' **व–घ**. ४ 'पज्जागदस्स' ( पर्यागतस्य ) **क–व**. ५ 'व्याहरन्ति केचित्' **न**.

**दाण्डायनः**—चिरन्तनप्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुम् ।

**सौधातकिः**—अवि अज्ज संबन्धिणीहिं समं संवुत्तं से दंसणं ण वत्ति । (क)

**दाण्डायनः**—संप्रत्येव भगवता वसिष्ठेन देव्याः कौसल्यायाः सकाशं भगवत्यरुन्धती प्रहिता यत्स्वयमुपेत्य वैदेहो द्रष्टव्य इति ।

**सौधातकिः**—जह एदे ट्ठविरा परप्परं मिलिदा तह अम्हे वि वडुहिं सह मिलिअ अणज्झाअमहुस्सवं खेलन्तो मणेम्ह[1]। अहं कुत्थ सो जणओ । ( इति परिक्रामतः । ) (ख)

**दाण्डायनः**—तथायं[3] ब्रह्मवादी पुराणराजर्षिर्जनकः प्राचेतसवसिष्ठावुपास्य संप्रत्याश्रमस्य बहिर्वृक्षमूलमधितिष्ठति । य एष

**हृदि नित्यानुषक्तेन सीताशोकेन तप्यते ।**
**अन्तःप्रसृप्तदहनो जरन्निव[4] वनस्पतिः ॥ २ ॥**

( इति निष्क्रान्तौ । )

**मिश्रविष्कम्भः ।**

---

(क) अप्यद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं न वेति ।

(ख) यथैते स्थविराः परस्परं मिलितास्तथावामपि बटुभिः सह मिलित्वानध्यायमहोत्सवं खेलन्तो मानयावः । अथ क्व स जनकः ।

---

निर्मांसो वृत्तमांसस्तु मांसलः ।' इति, 'कल्पः स्याद्विधिः' इति **केदारकपिलौ ।** किन्निमित्तम् । 'स तु वैखानसो यः स्याद्युक्ताचारो जितेन्द्रियः ।' इत्य**मरमाला** । ततः किमित्यागतः । **ततः** चन्द्रद्वीपतपोवनादपि । अद्य संबन्धिनीभिस्समं निर्वृत्तमस्य दर्शनं न वेति । यथैते सर्वे स्थविराः परस्परं मिलिताः तथा वयमपि बटुकैः सह मिलिताः अनध्यायमहोत्सवं खेलन्तो मानयामः । अथ क्व स जनकः । तथा अनिर्वचनीय इत्यर्थः । पुराणं अनादि च तत् ब्रह्म वेदः । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः ॥ **हृदि नित्यानुषक्ते**नेति ॥ २ ॥ **अन्तः** कोटरान्तरे । **जरन्** जीर्णः । 'तैरपुष्पाद्वनस्पतिः' इत्यमरः ॥ २ ॥ **इति मिश्रविष्कम्भः** ॥ 'उदात्तनीचपात्रोक्तौ मिश्रविष्कम्भ उच्यते ' इति **रूप-**

---

१ 'संभावेम्ह' ( संभावयावः ) क-व-घ. २ 'अह...जणओ' इत्येतन्नास्ति क-व-घ-पुस्तकेपु. ३ 'तदयं' क-घ-व. ४ 'ज्वलन्निव' व-घ.

[ ततः प्रविशति जनकः । ]

**जनकः—**

**अपत्ये यत्तादृग्दुरितमभवत्तेन महता**
**विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।**
**पृथुर्धारावाही नव इव चिरेणापि हि न मे**
**निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥ ३ ॥**

कष्टं एवं नाम जरया दुःखेन च दुरासदेन भूयः पराकसान्तपनप्रभृतिभिस्तपोभिरात्त[1]रसधातुरनवष्टम्भो नाद्यापि मम दग्धदेहः पतति । अन्धतामिस्रा ह्यसूर्या नाम ते लोका[2]स्तेभ्यः प्रतिविधीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते । अनेकसंवत्सरातिक्रमेऽपि प्रतिक्षणपरिभावनास्पष्टनिर्भासः प्रत्यग्र इव न मे दारुणो दुःखसंवेगः प्रशाम्यति । अयि मातर्देवयजनसम्भवे सीते ईदृशस्ते निर्माणभागः परिणतो येन लज्जया स्वच्छन्दमाक्रन्दितुमपि न शक्यते । हा पुत्रि

**अनियतरुदितस्मितं विराज-**
**त्कतिपयकोमलदन्तकुड्मलाग्रम् ।**
**वदनकमलकं शिशोः स्मरामि**
**स्खलदसमञ्जसमञ्जु[3] जल्पितं ते ॥ ४ ॥**

---

**कादर्शोक्तेः** ॥ **अपत्ये यत्तादृगि**ति ॥ ३ ॥ **अपत्ये** सीतायाम् । **दुरितं** अपवादरूपं पापम् । **तेन** पापेन **विषक्तः** विशेषेण सक्तः । **पृथुः** महान् । **धारावाही** अविच्छिन्नधारः । अत एव **चिरेणापि** बहुकाले गतेऽपि **नवः इव** स्थितः। **क्रकचः** ' करवत ' इति **महाराष्ट्राः**। **मन्युः** न विरमति हि । ' मन्युर्दैन्ये क्रुधि' इत्यमरः ॥ ३ ॥ एवं नाम कष्टमिति वाक्यखण्डः । **दुरासदं** दुःखविशेषणम् । स्वयं स्फीतं यथा तथा **पराकसान्तपनप्रभृतिभिः** कृच्छ्ररूपै**स्तपोभि**रपि उपलक्षित इत्यर्थः । '**रसा** रक्तादयः' इति, 'इन्द्रियाणि पृथिव्यादि पञ्चभूतानि धातवः' इति, 'अवष्टम्भाश्रयाधाराः' इति रुद्रशाश्वतहेमचन्द्राः । तथा च सुखलेशाभावाद्दुःखास्पदं देहः पतत्विति भावः ॥ ननु आत्मघातः क्रियतामत आह—**अन्धे**ति । 'इतीत्थमेवमित्येवम्' इति **चक्षूरूपः** । **प्रतिक्षणं परिभावनायाः** तिरस्कारस्य । **स्पष्टनिर्भासः** अवभासः यस्मात् । **प्रत्यग्रः**नूतनः।**भागः**अंशः। **येन** कारणेन । **अनियतमि**ति॥४॥ **कुड्मलाः** मुकुलाः।**कम-**

---

१ ' तपोभिः शोषितान्तःशरीरधातोरवष्टम्भ एव महानद्यापि...न पतति' **न**; '°धातुरनुपयुज्यमानः' **व–घ**. २ ' लोकाः प्रेत्य तेभ्यः' **न**. ३ 'मुग्ध' **व–घ**.

भगवति वसुन्धरे सत्यमतिदृढासि ।

**त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-**
**र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।**
**विद्यां वागिव यामसूत भवती तद्वत्तु या दैवतं**
**तस्यास्त्वद्दुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥५॥**

( नेपथ्ये )

इत इतो भगवतीमहादेव्यौ ।

**जनकः**—( दृष्ट्वा ) अये गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती । ( उत्थाय ) का पुनर्महादेवीत्याह । ( निरूप्य ) हा हा कथमियं महाराजदशरथस्य धर्मदाराः प्रियसखी मे कौसल्या । क ऐतत्प्रत्येति सैवेयमिति ।

**आसीदियं दशरथस्य गृहे यथा श्रीः**
**श्रीरेव वा किमुपमानपदेन सैषा ।**
**कष्टं बतान्यदिव दैववशेन जाता**
**दुःखात्मकं किमपि भूतमहो विपाकः ॥ ६ ॥**

---

**लकं** स्वार्थे कः । सरसिजं इति वा पाठः ॥ ४ ॥ **दृढा** निष्ठुरा । **त्वमिति** ॥५॥ **यदि** संभावनायाम् । **कुलगुरु**र्वसिष्ठः । **वाक्** सरस्वती । **तथाविशसनं** मारणप्रत्याम्नायपरित्यागमित्यर्थः । **अमृष्यथाः** असहथाः इति यावत् ॥५॥ भगवती च देवी च **भगवतीदेव्यौ** । 'देवी कृताभिषेकायाम्' इत्यमरः । महादेवी इति भ्रान्तः पाठः । 'जगन्माता महादेवी शर्वाणी त्रिपुरेश्वरी' **इत्यागमतन्त्रो**क्त्या महादेवीति नाम्नः परदेवतायामेवोचिततया अन्यत्र संभवेऽपचारसंभवात् । 'पुंभूम्नि **दाराः**' इत्यमरः । **प्रत्येति** विश्वसिति ॥ **आसीदियं दशरथस्ये**ति ॥ ६ ॥ **पदेन** कलङ्केन । **कष्टं** खेदकारि । **चिन्तात्मकं** चिन्तास्वरूपम् । **अन्यत्** जगद्विलक्षणम् । **किमपि भूतं** जन्तुरिव जाता बतेत्यर्थः । 'कष्टं त्रिषु स्यात्खेदकारिणि' इत्यमरमाला । अत एव 'कष्टा रन्ध्रव्यथा कष्टश्च' इति **मुरारिः** । 'चिन्ता हृदयसन्तापः' इति, 'भूतं क्ष्मादौ जन्तौ च' इति, 'बतानुकम्पने' इति हैमविश्वहलायुधाः । **अहो विपाकः** विरुद्धपरिणाम इति यावत् । अत्र बुधाबुधास्तावदवगमनभ्रान्तिभ्यां शिरसि

---

१ 'शुद्धिं गतायाः पुनः' न. २ 'एतां' न—क. ३ 'विकारः' न.

**य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः।**
**क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम्॥ ७॥**

(ततः प्रविशत्यरुन्धती कौसल्या कञ्चुकी च।)

**अरुन्धती**—ननु ब्रवीमि द्रष्टव्यः स्वयमुपेत्यैव वैदेह इत्येष वः कुलगुरोरादेशः। अत एव चाहं प्रेषिता। तत्कोऽयं पदे पदे महाननध्यवसायः।

**कञ्चुकी**—देवि संस्तभ्यात्मानमनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि।

**कौसल्या**—ईरिसे काले मिहिलाहिवो मए दिट्ठव्वो त्ति समं एव्व सव्वाइं दुःखाइं समुब्भवन्ति। ता ण सक्कुणोमि उव्वट्टमाणमूलबन्धणं हिअअं पज्जवत्थावेदुम्। (क)

**अरुन्धती**—अत्र कः सन्देहः।

**सन्तानवाहीन्यपि मानुषाणां**
**दुःखानि सम्बन्धिवियोगजानि।**
**दृष्टे जने प्रेयसि दुःसहानि**
**स्रोतःसहस्रैरिव संप्लवन्ते॥ ८॥**

(क) ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वाणि दुःखानि समुद्भवन्ति। तस्मान्न शक्नोम्युद्वर्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम्।

डोलायन्ते॥ ६॥ **य एव मे जन इति**॥ ७॥ **जनः** कौसल्या। 'स्त्रीपुंसौ कथयेज्जनः' इति **काव्यदीपिकायां दण्डी** व्याजहार॥ ७॥ **गुरोर्व**सिष्ठस्य। **अध्यवसायः** निश्चयः। **पदे पदे** इत्यनेन प्रतिक्षणं भिन्नभिन्न इति व्यज्यते। **संस्तभ्य** स्थिरीकृत्य। **अनुरुध्यस्व** अनुवर्तस्व॥ ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वदुःखानि समुद्भवन्ति। तस्मान्न शक्नोमि उद्वर्तमानमूलबन्धनं हृदयं व्यवस्थापयितुम्। **समं** युगपत्। **उद्वर्तमानं** वेष्टमानं **मूलबन्धनं** गर्भग्रन्थिः यस्य। मूलबन्धनं 'काळिज' इति **महाराष्ट्राः**॥ **सन्तानवाहीन्यपीति**॥ ८॥ सन्तानं परम्परां दैर्घ्यं वा वहन्ति धरन्ति **सन्तानवाहीनि**। **सम्बन्धिनो** बान्धवाः। **स्रोतसां** स्रोतोऽम्बुसरणानाम्। 'पाझर' इति **महाराष्ट्राः**। **संप्लवन्ते**

१ अस्मात्पूर्वं 'अयमपरः पापो दशाविपर्यासः' इत्यधिकं **व-घ**-पुस्तकयोः. २ 'महानध्यवसायः' **न-टी.** ३ 'उग्घट्टमाण' **व-घ.** ४ 'सद्वन्धु' **क-घ-व.**

**कौसल्या**—कहं णु खु वच्छाए वहूए एवं गदे तस्सा पिदुणो राएसिणो मे मुहं दंसम्ह। (क)

**अरुन्धती**—

**एष वः श्लाघ्यसम्बन्धी जनकानां कुलोद्वहः।**
**याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ॥ ९॥**

**कौसल्या**—एसो सो महाराअस्स हिअअणिव्विसेसो वच्छाए मे वहूए पिदा राएसी सीरद्धओ। हद्धी हद्धी सुमारिदम्हि अणिव्वेदरमणीए दिवहे। हा देव्व सव्वं तं णत्थि। (ख)

**जनकः**—(उपसृत्य) भगवत्यरुन्धति वैदेहः सीरध्वजोऽभिवादयते।

---

(क) कथं नु खलु वत्साया वध्वा एवं गते तस्याः पित्रे राजर्षये मुखं दर्शयामः।

(ख) एष स महाराजस्य हृदयनिर्विशेषो वत्साया मे वध्वाः पिता राजर्षिः सीरध्वजः। हा धिक् हा धिक् स्मारितास्मि अनिर्वेदरमणीयान्दिवसान्। हा दैव सर्वं तन्नास्ति।

---

प्रवहन्तीति यावत्॥ ८॥ कथं वत्साया मे वध्वा एवं गते तस्याः पित्रे राजर्षये मुखं दर्शयामः। 'वधूः स्नुषा' इति **शब्दमाला। गते** सतीत्यर्थः। दर्शयाम इति निर्वेदाद्बहुवचनम्। अत एव 'वयं तत्त्वान्वेषात्' इत्यस्मद्व्याख्यात**शाकुन्तले॥ एष वः श्लाघ्य इति॥ ९॥** 'वधूवराणां पितरो मिथस्सम्बन्धिनो मताः' इत्य**गस्त्यः। जनकानां** राज्ञाम्। उद्वहतीत्युद्वहः **कुलस्य उद्वहः** श्रेष्ठः। 'उद्वहः श्रेष्ठधुर्ययोः' इति **यादवः। ब्रह्मणः** तत्त्वस्य **पारायणं** उपदेशम्। **जगौ** चकार इति लाक्षणिकोऽर्थः। 'पारायणं तद्वदुपदेशः पारायणं' इति पदमाला। व्यधादिति च पाठः॥ ९॥ कथमेष स महाराजस्य हृदयनिर्विशेषो वत्साया मे वध्वाः पिता राजर्षिः सीरध्वजः। हा धिक् हा धिक् संस्मृतास्मि अनिर्वेदरमणीयान् दिवसान्। हा दैव सर्वमेव तन्नास्ति॥

---

१ 'हिअआणन्दो' (हृदयानन्दः) क–घ–व. २ 'संभाविदम्हि अणुवट्ठिदमहूसवे दिअहे' (सम्भावितास्म्यनुपस्थितमहोत्सवे दिवसे) व–घ.

**यथा पूतंमन्यो निधिरपि पवित्रस्य महसः**
**पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः ।**
**त्रिलोकीमङ्गल्याम[1]वनितलेलीनेन[2] शिरसा**
**जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ १० ॥**

**अरुन्धती**—अक्षरं[3] ते ज्योतिः प्रकाशताम् । स त्वां पुनातु देवः परो रजसां[4] य एष तपति ।

**जनकः**—आर्ये गृष्टे अप्यनामय[5]मस्याः प्रजापालकस्य मातुः ।

**कञ्चुकी**—( स्वगतम् ) निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः । ( प्रकाशम् ) राजर्षे अनेनैव मन्युना चिरपरित्यक्तरामभद्रमुखचन्द्रदर्शनां नार्हसि दुःखयितुमतिदुःखितां देवीम् । रामभद्रस्यापि दैवदुर्योगः कोऽपि । यत्किल समन्ततः प्रवृत्तबीभत्सकिंवदन्तीकाः पौरजानपदा नाग्निशुद्धिमनल्पकाः[6] प्रतियन्तीति दारुणमनुष्ठितं देवेन ।

**जनकः**—( सरोषम् ) आः कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने । कष्टमेवंवादिना जनेन रामभद्रपरिभूता अपि वयं पुनः परिभूयामहे ।

---

**यथा पूतंमन्य इति** ॥ १० ॥ **यया** भवत्या उषसा च । आत्मानं पूतं मन्यते **पूतंमन्यः** । **महसः** ब्रह्मवर्चसस्य दीप्तेश्च । **ते** तव **पतिः** वसिष्ठः । अतिशयेन विशेषेण गुरुः **गुरुतमः** । **त्रिलोक्याः** मङ्गले साधुः **मङ्गल्या** तां भगवतीं त्वामित्यर्थः । 'स्त्रीनपुंसकयोरुषः' इति **लिङ्गनिर्णयः** । श्लोकोऽयं यथाकथञ्चिदुषःपक्षेऽप्युन्नेयः ॥ १० ॥ **अक्षरं** क्षराद्भिन्नम्, **ज्योतिः** सूर्यः । भङ्ग्यन्तरेणाह—**स** इति । **रजसां** रजोगुणानाम् **परः** शत्रुः उपलक्षणमेतत् । तमसां चेति भावः । तथा च दूरतरः परिशेषात् सत्त्वैकनिष्ठ इति फलितोऽर्थः । **प्रजापालकस्य** मातुरस्या इत्यन्वयः । मृषापवादकल्पकप्रजापालक इति परिहासोक्तिः । **निरवशेषं** निश्शेषं अतिनिष्ठुरं च यथा तथा । **मन्युना** कोपेन । **दैवदुर्योगः** ग्रहपीडा । अत एव 'तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः' इति पौराणिकाः । प्रतीतिविश्वासविषयां कुर्वन्तीत्यर्थः । **दारुणं** कर्म इति शेषः । परित्याग इति यावत् । **परिभूताः** सहसा परि-

---

१ 'माङ्गल्याम्' न–क. २ 'लीलेन' व–घ. ३ 'परं' व–घ. ४ 'परोरजाः' व–घ. ५ 'अपि कुशलम्' व–घ. ६ 'अल्पकाः' व–घ.

**अरुन्धती**—(निश्वस्य ।) एवमेतत् । अग्निरिति वत्सां प्रति परिलघून्यक्षराणि । सीतेत्येव पर्याप्तम् । हा वत्से

**शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा**
**विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति[1] ।**
**शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां[2]**
**गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ ११ ॥**

**कौसल्या**—अहो उम्मीलन्ति[3] विअ वेअणाओ । (इति मूर्च्छति)

**जनकः**—हा कष्टं किमेतत् ।

**अरुन्धती**—राजर्षे किमन्यत् ।

**स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः**
**स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम् ।**
**विपाके घोरेऽस्मिन्नथ[4] खलु विमूढा तव सखी**
**पुरंध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥ १२ ॥**

**जनकः**—हन्त हन्त सर्वथा नृशंसोऽस्मि संवृत्तः । यच्चिरस्य दृष्टान्प्रियसुहृदः प्रियदारान्न[5] स्निग्धं पश्यामि ।

**स सम्बन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं**
**स चानन्दः साक्षादपि च निखिलं जीवितफलम् ।**

---

(क) अहो उन्मीलन्तीव वेदनाः ।

---

त्यागेनेति भावः ॥ **शिशुर्वा शिष्या वेति** ॥ ११ ॥ **तथा** दूरे इत्यर्थः । **विशुद्धेस्तूत्कर्षः** कर्ता । **त्वयि** विषये । 'भक्तिश्च निश्चय' इति त्रिकाण्डी । **स्त्रैणं** स्त्रीत्वम् । 'स्त्रैणं स्याद्भाववृन्दयोः' इति कपिलः । **स्थानं** आस्पदम् । **गुणिनि** गुणभाजि प्राणिनि । इदं सप्तमी सीतां प्रति संबोधनं च । **लिङ्गं** स्त्रीपुंनपुंसकम् । **वयः** इति 'तेजसां हि न वयस्समीक्ष्यते' इत्यस्य छायानुकरणमेतत् ॥ ११ ॥ अहो उन्मीलन्तीव वेदनाः ॥ **स राजा तदिति** ॥ १२ ॥ **राजा** दशरथः । **आविर्भूतं** चित्तारूढमिति यावत् । **पुरन्ध्रीणां** कुटुम्बिनीनाम् ॥१२॥ 'चिरस्थायाश्चिरार्थकाः' इत्यमरः । **स सम्बन्धी श्लाघ्य इति** ॥ १३ ॥ **सुहृदः** दशरथस्य **असौ** कौसल्या । **साक्षात्** प्रत्यक्षः । **निखिलमिदमिति** शेषः । **जीवः** असुधारणम् । अतः जीवादपीत्यर्थः ।

---

१ 'जनयति' व–घ. २ 'जगतः' घ. ३ 'समुन्मूलअन्तीव' (समुन्मूलयन्तीव) **न.** ४ 'असिन्न खलु न विमूढा' **न**; 'असिन्ननु खलु' **व–घ.** ५ 'दारानस्निग्ध इव' **न.**

शरीरं जीवो वा यदधिकमतोऽन्यत्प्रियतरं[1]
महाराजः श्रीमान्किमिव मम नासीद्दशरथः ॥ १३ ॥

कष्टमियमेव सा कौसल्या ।

यदस्याः पत्युर्वा रहसि परमं दूषितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत्स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

**अरुन्धती**—हा कष्टम् । अतिचिरनिरुद्धनिःश्वासनिष्यन्दं[2] हृदयमस्याः ।

**जनकः**—हा प्रियसखि । ( इति कमण्डलूदकेन सिञ्चति । )

**कञ्चुकी**—

सुहृदिव प्रकटय्य सुखप्रदः[3]
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम्[4] ॥ १५ ॥

---

**महाराजः** इति प्रथमैकवचनम् । **किमिव नासीत्** पूर्वोक्तं सर्वमप्यासीदेवेत्यर्थः ॥ १३ ॥ **यदस्याः पत्युर्वेति** ॥ १४ ॥ **अस्याः** पत्युश्चेति ज्ञेयम् । **परमं** अधिकम् । **दूषितं** प्रणयकलहः । **उपालम्भस्य** गर्हणायाः । **विधिः** समाधानप्रकारः **मदधीनः** ममायत्तः **तत्** चरितमिति शेषः । **य**चरितं कर्तृ, **अवस्कन्द्य** अभिनिपत्य ॥ १४ ॥ हा कष्टमिति खेदातिशये । 'हा कष्टमस्मिन् जने' इत्यसद्व्याख्यातभोजचम्पौ । **चिरनिरुद्धः निश्वासस्य निष्यन्दः** निर्गमः यस्मिन् ॥ **सुहृदिव प्रकटय्येति** ॥ १५ ॥ **प्रथमं** आदौ । **एकः** मुख्यः **रसः** अभिनिवेशः प्रीतिर्वा यस्याम् । **अनुकूलतां** सर्वशुभानुकूल्यम् । **प्रकटय्य** प्रकटीकृत्य । **पुनः** पश्चात् । **अकाण्डे** अकाले अनुकूलताया **निवर्तने** प्रतिकूलतापादनविषये **दारुणः** । **विशिनष्टि** परिशिष्टां करोतीति यावत् । **विधिर्दैवम्** । 'पुनः पश्चात्' इति समासनिघण्टुः ॥ १५ ॥ वत्से जानकि क्वासि क्वासि । स्मरामि ते नवविवाहलक्ष्मीपरिग्रहैकमङ्गलं चटुलमुखपुण्डरीकम् । अर्हत्कौमुदीचन्द्रचन्द्रिकासुन्दरैरङ्गैः

---

१ 'प्रियतमः' ब–घ. २ 'निःश्वासनिष्ठुरं' ब–घ. ३ 'सुखप्रदाम्' न. ४ 'परिशिनष्टि विधिर्मनसो रुजम्' न.

**कौसल्या**—( आश्वस्य ) हा वच्छे जाणइ कहिं सि। सुमरामि दे णवविवाहलच्छीपरिग्गहेक्कमण्डनं पप्फुरन्तसुद्धविहसिदं मुद्धमुहपुण्डरीअं। आप्फुरन्तचन्दचन्दिआसुन्दरेहिं अङ्गेहिं पुणो वि मे जादे उज्जोएहि उच्छङ्गम्। सव्वदा महाराओ भणादि। एसा रहुउलमहत्तराणं वहू अम्हाणं दु [1]जणअसुदा दुहिदेव्व। (क)

**कञ्चुकी**—यथाह देवी।

**पञ्चप्रसूतेरपि तस्य राज्ञः**
**प्रियो विशेषेण सुबाहुशत्रुः।**

---

(क) हा वत्से जानकि कुत्रासि। स्मरामि ते नवविवाहलक्ष्मीपरिग्रहैकमण्डनं प्रस्फुरच्छुद्धविहसितं मुग्धमुखपुण्डरीकम्। आस्फुरच्चन्द्रचन्द्रिकासुन्दरैरङ्गैः पुनरपि मे जाते उद्द्योतयोत्सङ्गम्। सर्वदा महाराजो भणति एषा रघुकुलमहत्तराणां वधूरस्माकं तु जनकसुता दुहितैव।

---

पुनरप्युद्द्योतयोत्सङ्गम्। सर्वथा महाराज एवं भणति, एषा रघुकुलमहत्तराणां वधूरस्माकं पुनर्जनक ( सुता ) दुहितैव। पुण्डरीकमिति कथनं पुरुषेच्छायोग्यवयस्सूचकम्। 'यौवने पुरुषेच्छायां विरहे चाङ्गपाण्डिमा' इति **सार्वभौमः।** अत एव 'पाण्डि( म? )निमग्नं वपुः' इति अस्मद्व्याख्यातविद्धसालभञ्जिकायाम्। **अर्हन्त्यः** पूज्याः अभिनन्दनीयाः याः **कौमुदीचन्द्रचन्द्रिकाः** तद्वत् **सुन्दरैः** लोभनीयैः, 'पूर्णिमायामयुग्मस्थानजनौ कौमुदी मता। शेषयामद्वयस्था या ज्योत्स्ना सा चन्द्रिकोच्यते॥' इति **साहित्यमण्डने श्रीनाथः। चन्द्रः** कर्पूरः। एतेन विविधपरिमलाङ्गी नायिकेयं सूचिता। 'सा नानादिव्यगन्धिनी' इति **पद्मिनीप्रकरणे।** पाटलगन्धीत्यान्ध्रपदे **क्षेत्रियश्च।** मध्ये चन्द्रपदनिवेशः धोरणीसन्दर्भाय। च( न्दि )आ इति कवेः प्रमादः। 'चन्द्रिकायां म' इति विशेषानुशासनेन चन्दिमा इति वक्तव्यस्य साधीयस्त्वात्। 'चन्दिमासुन्दरेहिं' इत्यविचारितरमणीयः पाठः। पौनरुक्त्यासङ्गतिक्रोडीकृतत्वात्। **महत्तराणां** पूर्वेषाम्। **वधूः** स्नुषा। अस्मिन् घट्टे केचिदव्युत्पन्नाः कूपपतिता इव रज(ट?)त्कुक्कुटाः कण्ठघोषातिशयमभिनयन्तीति दिक्॥ दुहितृत्वं समर्थयते **पञ्चप्रसूतेरपीति॥ १६॥ पञ्च प्रसूतयः** प्रसवाः यस्य सीतया सहेति भावः॥ 'औरसो मानितः क्रीतः प्रोषितः स्थापितोवितः। गृहीतो विधिनेत्याद्या सद्भिरुक्ताः प्रसूतयः॥' इति पुराणपद्धतेः। पञ्चप्रसूतेः विस्तृतप्रसवस्येति चार्थः। 'विस्तारे पञ्चशब्दः स्यात्संख्याभेदे प्रतारणे। व्यक्तौ च' इति **धनञ्जयः॥ सुबाहुशत्रुः** रामः।

---

१ 'जणअसंबन्धेण दुहिदिआ एव्व' व—घ.

वधूचतुष्केऽपि यथैव शान्ता
प्रिया तनूजास्य तथैव सीता ॥ १६ ॥

**जनकः**—हा प्रियसख महाराज दशरथ एवमसि सर्वप्रकारहृदयङ्गमः। कथं विस्मर्यसे।

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि।
त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धबीजं च त-
द्घोरेऽस्मिन्मम जीवलोकनरके पापस्य धिग्जीवितम् ॥१७॥

**कौसल्या**—जादे जाणइ किं करोमि। दिढवज्जलेवपडिबद्धणिच्चलं हदजीविदं मं मन्दभाइणीं ण पडिच्चअदि। (क)

**अरुन्धती**—आश्वसिहि राजपुत्रि बाष्पविश्रामोऽप्यन्तरे कर्तव्य एव। अन्यच्च किं न स्मरसि यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरुर्भवितव्यं तथेत्युपजातमेव किं तु कल्याणोदर्कं भविष्यतीति।

---

(क) जाते जानकि किं करोमि। दृढवज्रलेपप्रतिबद्धनिश्चलं हतजीवितं मां मन्दभागिनीं न परित्यजति।

---

**वधूचतुष्के** स्नुषाचतुष्टयेऽपि, 'चतुष्कं च चतुष्टयम्' इति द्विरूपः। यथा सीतैव मान्या **तथैवास्य** दशरथस्य सीतैवेति परामृश्यते। **प्रिया तनूजा** दुहितेत्यर्थः। तथा च दशरथस्य पुत्रेषु यथा रामः प्रियः तथा स्नुषासामान्या सीता। पञ्चप्रसूतेरित्यत्र पञ्चशब्दार्थद्वयचमत्कारेण पद्धतिन्यायबलेन च प्रिया दुहितैवेति भावः। अत्र पद्ये बहवो भ्रमन्ति, शिष्यगुणग्राहिणः प्रमाणम् ॥१६॥ **कन्यायाः किल पूजयन्तीति** ॥१७॥ **सम्बन्धे** आवयोरिति शेषः। **तत्** पूजनम्। **विपरीतं** व्यत्यस्तमेव। कथमित्यत आह—**अभूदिति**। **आराधनं** त्वत्कर्तृकं पूजनम्। **मयि** अभूत्। **बीजं** कारणं च अपहृतमित्यर्थः। **तत्** प्रसिद्धं सीतेत्यर्थः। बीजमिति ध्वनिः। तत् तस्मात्। घोरे इति चतुर्थचरणेनान्वयो योज्यः। **जीवलोक** एव **नरकः** ॥ १७ ॥ जाते जानकि किं करोमि। दृढवज्रलेपपरिबद्धमिव निश्चलं हतजीवितं मां मन्दभागिनीं (न)परित्यजति। **विश्रामः** विरतिः। **अन्तरा** मध्ये। **कल्याणं उदर्कः** यस्मिन्

---

१ 'यथाहि' व; 'तथैव नान्या' न. २ 'यथैव' न. ३ 'विधोऽप्यपहृतः' न–घ. ४ '०लेवघडिअबन्धणिच्चलं' क–घ–व. ५ 'कुलगुरुस्तदुपजातमेव' व–घ.

**कौसल्या**—कुदो अदिक्कन्दमणोरहाए मह एदम्। (क)

**अरुन्धती**—तत्किं मन्यसे राजपत्नि मृषोद्यं तदिति। न हीदं सुक्षत्रियेऽन्यथा मन्तव्यम्। भवितव्यमेव तेन।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोऽभूत्।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता
नैते वाचं विप्लुतार्थां वदन्ति॥ १८॥

(नेपथ्ये कलकलः। सर्वे आकर्णयन्ति।)

**जनकः**—अये अद्य खलु शिष्टानध्ययन इत्यस्खलितं खेलतां बटूनां कलकलः।

**कौसल्या**—सुलहसोक्खं दाव बालत्तणं होदि। (निरूप्य।)

---

(क) कुतोऽतिक्रान्तमनोरथाया ममैतत्।

---

तत्। भवितव्यमित्यस्यानुषङ्गः। 'उदर्कः फलमुत्तरम्' इत्यमरः। कुतोऽतिक्रान्तमनोरथाया ममैतत्। '**क्षत्रिया** क्षत्रियाण्यपि' इत्यमरः॥ **आविर्भूतज्योतिषामिति**॥ १८॥ **आविर्भूतं ज्योतिः** परं ब्रह्म येषु येभ्यो वा। **व्याहाराः** उक्तयः। **भद्रा** शुभा। **लक्ष्मी**र्मङ्गलदेवतेत्युपलक्षणम्। सर्वदेवता इति सिद्धान्तः। 'अपि वा जीवितं जह्याम्' इति रामः। 'विप्रप्रसादाद्धरणीधरोऽहम्' इति, 'विजितेयं मही कृत्स्ना ब्राह्मणानां प्रसादतः।' इति च कृष्णः। 'मूलं कृष्णो ब्रह्मणो ब्राह्मणाश्च' इति **महाभारते**। 'स मन्त्रो ब्राह्मणाधीनः' इत्यागमेषु। 'एता एव देवताः' इति श्रुतिश्च। इति दिक्॥ **निषक्ता** नियतं यथा तथा सिक्तेत्यर्थः। अनेन स्वतस्सिद्धेति विभाव्यते। **विप्लुतः** निरस्तः शब्द**स्यार्थः** फलपरिणामः यस्याम्॥ १८॥ न विद्यते अध्ययनं यस्मिन्। **अस्खलितं** अकुण्ठितं यथा तथा। सुलभसौख्यमिदानीं बालत्वं भवति। अह्महे एतेषां मध्ये क एष रामभद्रस्य कौमारलक्ष्मीसदृशैः सावष्टम्भैः मुग्धललितैरङ्गैर्दारकोऽस्माकं लोचनानि शीतलयति॥ 'अवष्टम्भस्तु संस्थानवि-

---

१ 'भअवदि अदिक्कन्तो मणोरहो' (भगवति, अतिक्रान्तो मनोरथः) **व–घ**. २ इदं नास्ति **न–क**–पुस्तकयोः. ३ 'विप्लुतां व्याहरन्ति' **व–घ**. ४ 'शिष्टानध्यायः' **क–घ–व**. ५ 'उद्धतं' **क–घ–व**.

अम्हहे एदाणं मज्झे को एसो रामभद्दस्स कोमारलच्छीसरिसेहिं सावट्ठम्भेहिं मुद्धललिदेहिं अङ्गेहिं अम्हाणं लोअणाइं सीअलावेदि ।(क)

**अरुन्धती**—( अपवार्य सहर्षबाष्पम् । ) इदं नाम तद्भागीरथी-[1]निवेदितरहस्यं कर्णामृतम् । न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति । ( प्रकाशम् । )

**कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो**
**बटुपरिषदं पुण्यश्रीकः [2]श्रियेव सभाजयन् ।**
**पुनरपि शिशु[3]र्भूतो वत्सः स मे रघुनन्दनो**
**झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ १९ ॥**

**कञ्चुकी**—नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये ।

**जनकः**—एवमेतत् । तथा हि

**चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो**
**भस्म[4]स्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।**
**मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं**
**पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥ २० ॥**

---

(क) सुलभसौख्यं तावत् बालत्वं भवति । अहो एतेषां मध्ये क एष रामभद्रस्य कौमारलक्ष्मीसदृशैः सावष्टम्भैर्मुग्धललितैरङ्गैरस्माकं लोचनानि शीतलयति ।

---

शेषे गर्वतोषयोः ' इति समासः । **मुग्धललितैः** मनोज्ञविलासैः । **सहर्षेति**—लावण्यदर्शनेन हर्षः ग्राह्य ( ? ) कपोलश्च इत्युत्कण्ठा ॥ **कुवलयदलस्निग्ध** इति ॥ १९ ॥ **स्निग्धः** मसृणः । **श्रिया** शोभया । **सभाजयन्** आनन्दयन् । अमृतमयाञ्जनम् ॥ १९ ॥ **चूडाचुम्बितकङ्कपत्र**मिति ॥ २० ॥ चूडा मौलिः चुम्बितः स्पृष्टः यैस्ते **चूडाचुम्बिताः** तादृशः **कङ्कपत्राः** बाणाः यस्मिन् । '**अभितः** पार्श्वयोः' इति **नन्दी** । **भस्म** भसितं **स्तोकः** अल्पश्चासौ **पवित्रः** व्याघ्रनखः ताभ्यां **लाञ्छितं** 'उभयं बटुरक्षकम्' इत्यनुभवसिद्धम् । 'पवित्रं स्यात्पुंसि व्याघ्रनखे' इति **धनञ्जयः** । रुरुः कृष्णसारः तत्संबन्धिनीं **रौरवीं** उत्तरीयार्थमिति भावः । **मेखलया** च 'खड्गरज्जौ च मेखला' इति **पद्ममाला** । 'पीतमाञ्जिष्ठौ' इति कपिलः । **पैप्पलः** पिप्पलसंबन्धी 'क्षत्रियाणां तु पैप्पलः'

---

१ 'निवेदितं रहस्यकर्णामृतम् ' न. २ ' श्रियैव ' न. ३ 'भूत्वा ' न. ४ ' स्तोम ' व.

भगवत्यरुन्धति किमुत्प्रेक्षसे कुतस्त्योऽयमिति ।

**अरुन्धती**—अद्यैवागता वयम् ।

**जनकः**—आर्य गृष्टे अतीव मे कौतुकं वर्तते तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ । इमं च बालकं ब्रूहि । वत्स केऽप्येते प्रवयसस्त्वां दिदृक्षव इति ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

**कौसल्या**—किं मण्णेध एव्वं भणिदो आअमिस्सदित्ति । ( क )

**जनकः**—भिद्येत वा सद्वृत्तमीदृशस्य निर्माणस्य ।

**कौसल्या**—( निरूप्य । ) कहं सविणअणिसामिदगिट्ठिवअणो विसज्जिदइसिदारओ इतोऽहिमुहं पसरिदो एव्व सो वच्छो । (ख)

**जनकः**—( चिरं निर्वर्ण्य । ) भोः किमप्येतत् ।

**महिम्नामेतस्मिन्विनयशिशुतामौग्ध्यमसृणो**
**विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः ।**
**मनो मे संमोहः स्थिरमपि हरत्येष बलवा-**
**नयोधातुं यद्वत्परिलघुरयस्कान्तशकलः ॥ २१ ॥**

( क ) किं मन्यध्व एवं भणित आगमिष्यतीति ।

( ख ) कथं सविनयनिशमितगृष्टिवचनो विसर्जितर्षिदारक इतोभिमुखं प्रसृत एव स वत्सः ।

इति स्मृतेः ॥ २० ॥ **प्रवयसः** वृद्धाः । किमन्यैः । एवं फणित आगमिष्यतीति । **वृत्तं** चरित्रम् । कथं सविनयनिशमितकञ्चुकिवचनः विसर्जिताशेषपरिसरदारकः इतोमुखं प्रसृत एव वत्सः । **दारकाः** बटवः । **प्रसृतः** प्रचलितः । **निर्वर्ण्य** दृष्ट्वा । **भो** इति मनः प्रति संबोधनम् ॥ **महिम्नामेतस्मि-न्निति** ॥ २१ ॥ **एतस्मिन्** वटे ( बटौ ? ) शिशिरे सुखकर इति यावत् । **मौग्ध्येन** सौन्दर्येण **मसृणः** स्निग्धः । **विदग्धैः** चतुरैः । नितरां ग्राह्यः **निग्राह्यः** वेद्यः । **अविदग्धैः** अचतुरैः, न वेद्य इत्यर्थः । **महिम्नामतिशयः** । किं तत आह—**मन** इति कर्म । 'प्रेमावेशे च संमोहः' इति धरणिः । **अयोधातुं** लोहधातुम् । **परिलघुः** सूक्ष्मः । **शकलः** खण्डः । '**यद्वत्तद्वद्यथा**

१ 'भिद्यते' न. २ 'विसज्जिदासेससरिसदारओ' न. ३ 'शिशिरः' न. ४ 'संमोहस्थिर°' न.

**लवः**—( प्रविश्य । ) अज्ञातनामक्रमाभिजनान्पूज्यानपि नः स्वतः कथमभिवादयिष्ये । ( विचिन्त्य । ) अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते । ( सविनयमुपसृत्य । ) एष वो लवस्य शिरसा प्रणामपर्यायः ।

**अरुन्धतीजनकौ**—कल्याणिन् आयुष्मान्भूयाः ।

**कौसल्या**—जाद चिरं जीव । ( क )

**अरुन्धती**—एहि वत्स । ( लवमुत्सङ्गे गृहीत्वात्मगतम् । ) दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथोऽपि मे सम्पूर्णः ।

**कौसल्या**—जाद इदो वि दाव एहि । ( उत्सङ्गे गृहीत्वा । ) अम्हहे ण केवलं दरविअसन्तणीलुप्पलसामलुज्जलेण देहबन्धेण कवलिदारविन्दकेसरकसाअकण्ठकलहंसणिणाददीहरदीहरेण सरेण अ रामभद्दं अणुहरदि । णं कठोरकमलगब्भपम्हलो सरीरप्पस्सो वि तारिसो एव्व वच्छस्स । जाद पेक्खामि दाव दे मुहपुण्डरीअम् । ( चिबुकमुन्नमय्य निरूप्य सबाष्पाकूतम् । ) राएसि किं ण पेक्खसि णिउणं णिरूवज्जन्तं से मुहं वच्छाए वहूए मुहचन्देण संवददि एव्व । ( ख )

**जनकः**—पश्यामि सखि पश्यामि ।

---

( क ) जात चिरं जीव ।

( ख ) जात इतोऽपि तावदेहि । अहो न केवलं दरविकसन्नीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसनिनाददीर्घ-

---

तथा' इति त्रिकाण्डशेषः । 'अयस्कान्तमणिशलाकिकेव लोहधातुम्' इति **बाण**कविकवनच्छायानुसरणमेतत् ॥ २१ ॥ अज्ञातानि नामक्रमाभिजात्यानि यैः येषां च परस्परमित्यर्थः । **क्रमः** परम्परा । '**आभिजात्यं** तु वंशे च' इति लिङ्गानुशासनम् । **प्रकारः** विध्यन्तरम् । 'पर्यायोऽवसरे क्रमः' इत्यमरः ॥ जात चिरं जीव । जात इतोऽपि तावदेहि । अह्महे न केवलं दरविस्पष्टनीलोत्पलश्यामलोज्ज्वलेन देहबन्धेन कवलितारविन्दकेसरकषायकण्ठकलहंसघोषेण घर्घरानुनादनिर्भरदीर्घतरेण स्वरेण रामभद्रमनुसरति । कठोरः कमलगर्भपक्ष्मलः

**कौसल्या**—अम्हहे उम्मत्तीभूदं विअ मे हिअअं किंपि एदोमुहं विलवदि । (क)

**जनकः**—

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
संपूर्णप्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युतिः ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा दैवं किमुत्पथैर्मम मनः पारिप्लवं धावति ॥ २२ ॥

**कौसल्या**—जाद अत्थि दे मादा सुमरसि वा तादम् । ( ख )

**लवः**—नहि नहि ।

**कौसल्या**—तदो कस्स तुमम् । ( ग )

**लवः**—भगवतः वाल्मीकेः ।

**कौसल्या**—अयि जाद कहिदव्वं कहेहि । ( घ )

**लवः**—एतावदेव जानामि ।

( नेपथ्ये )

भो भोः सैनिका एष खलु कुमारश्चन्द्रकेतुराज्ञापयति न केनचिदाश्रमाभ्यर्णभूमय आक्रमितव्या इति ।

**अरुन्धतीजनकौ**—अये मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुरद्य द्रष्टव्य इत्यहो सुदिवसः ।

---

दीर्घेण स्वरेण च रामभद्रमनुहरति । ननु कठोरकमलगर्भपक्ष्मलः शरीरस्पर्शोऽपि तादृश एव वत्सस्य । जात प्रेक्षे तावत्ते मुखपुण्डरीकम् । राजर्षे किं न प्रेक्षसे निपुणं निरूप्यमाणमस्य मुखं वत्साया वध्वा मुखचन्द्रेण संवदत्येव ।

( क ) अहो उन्मत्तीभूतमिव मे हृदयं किमपीतोमुखं विलपति ।

( ख ) जात अस्ति ते माता स्मरसि वा तातम् ।

( ग ) ततः कस्य त्वम् ।

( घ ) अयि जात कथयितव्यं कथय ।

---

१ 'संवृत्तिः प्रति°' न. २ 'देवि' न.

**कौसल्या**—वच्छलक्खणस्स पुत्तओ आणवेदित्ति अमिदबिन्दुसुन्दराइं अक्खराइं सुणीअन्दि । ( क )

**लवः**—आर्य क एष चन्द्रकेतुर्नाम ।

**जनकः**—जानासि रामलक्ष्मणौ दाशरथी ।

**लवः**—एतावेव रामायणकथापुरुषौ ।

**जनकः**—अथ किम् ।

**लवः**—तत्कथं न जानामि ।

**जनकः**—तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः ।

**लवः**—ऊर्मिलायाः पुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

**अरुन्धती**—( विहस्य । ) आविष्कृतं कथाप्रावीण्यं वत्सेन ।

**जनकः**—( विचिन्त्य । ) यदि त्वमीदृशः कथायामभिज्ञस्तद्ब्रूहि तावत्पृच्छामस्तेषां दशरथात्मजानां कियन्ति किंनामधेयान्यपत्यानि केषु केषु दारेषु प्रसूतानीति ।

**लवः**—नायं कथाप्रविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

**जनकः**—किं न प्रणीत एव कविना ।

**लवः**—प्रणीतो न प्रकाशितः । तस्यैव कोऽप्येकदेशः सन्दर्भान्तरेण रसवानभिनेयार्थः कृतः । तं च स्वहस्तलिखितं मुनिर्भगवान्व्यसृजद्भगवतो भरतस्य मुनेस्तौर्यत्रिकसूत्रकारस्य ।

**जनकः**—किमर्थम् ।

**लवः**—स किल भगवान्भरतस्तमप्सरोभिः प्रयोजयिष्यतीति ।

**जनकः**—सर्वमिदमाकूततरमस्माकम् ।

---

( क ) वत्सलक्ष्मणस्य पुत्रक आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते ।

---

१ 'प्रबन्धान्तरेण' न. २ 'आकूतकरम्' ब–घ.

लवः—महती पुनस्तस्मिन्भगवतो वाल्मीकेरास्था । यतः केषांचिदन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितम् । तेषामनुयात्रिकश्चापपाणिः प्रमादापनोदनार्थमस्मज्ज्याता प्रेषितः

कौसल्या—जाद भादावि दे अत्थि (क)

लवः—अस्त्यार्यः कुशो नाम ।

कौसल्या—जेट्ठेत्ति भणिदं होदि । (ख)

लवः—एवमेतत् । प्रसवानुक्रमेण स किल ज्यायान् ।

जनकः—किं यमजावायुष्मन्तौ ।

लवः—अथ किम् ।

जनकः—वत्स कथय कथाप्रबन्धस्य कीदृशः पर्यन्तः ।

लवः—अलीकपौरापवादोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजनसम्भवां सीतामासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति ।

---

(क) जात भ्रातापि तेऽस्ति ।

(ख) ज्येष्ठ इति भणितं भवति ।

---

शिशिरस्पर्शोऽपि तादृश इति शेषः । **तं** एकदेशम् । आतङ्कः पीडा । **तस्मिन्** भरताचार्ये । **आस्था** अभिनिवेशः प्रीतिर्वा । **अमीषां** दृश्यमानानामिति ध्वनिः । आश्रमं उद्दिश्येति शेषः । आश्रमं प्रतीति वा पाठः । **अनुयात्रिकः** अनुप्रस्थानदक्षः । भ्राताऽपि तेस्ति । आर्यपदस्वारस्यादाह—**जेट्ठे** इति । ज्येष्ठ इति गणितं (भणितं?) भवति । 'ज्येष्ठस्तु मासभेदे च पूर्वजे च' इति नन्दी । मासभेदे तु ज्येष्ठ एवेति केचित् । तन्न त्रिज्येष्ठमित्यत्र विरोधात् । अत एव ज्येष्ठो ज्येष्ठश्चेति द्विरूपेभिधानात् । मासभेदे ज्येष्ठोऽपीति **नन्दार्जुनो** व्याचकारेति दिक् ॥ 'परिपाटिरनुक्रमः' इत्यमरः । प्रसवक्रमात्, 'अनुजः पूर्वजो ज्येष्ठस्त्वनुजो यमलौ यमौ' इति **वस्तुनिर्णयः** । **कथायाः** चरितस्य । **प्रबन्धः** गु(म्फ)नम् । 'प्रबन्धो गुम्फने ग्रन्थे' इति शब्दमाला । **पर्यन्तः** पूर्तिः ॥ हा वत्से मुग्ध चन्द्रमुखि क इदानीं ते कुसुमभूतस्य शरीरस्य झटिति दैवदुर्विलासपरिणामः एकाकिन्या निपतितः । 'एकलिआ' इति देशीयशब्दः । **'एकली'** इति

---

१ 'प्रमादच्छेदनार्थम्' न; 'अप्रमादार्थम्' घ. २ '°प्रपञ्चस्य' न. ३ 'कियान्' न. ४ 'पौरप्रवादोद्विग्नेन' व—व.

**कौसल्या**—हा वच्छे मुद्धचन्दमुहि को दाणिं दे सरीरकुसुमस्स झत्ति देव्वदुव्विलासपरिणामो एक्कलिआए निवडिदो। (क)

**जनकः**—हा वत्से

**नूनं त्वया परिभवं च वनं च घोरं**
**तां च व्यथां प्रसवकालकृतामवाप्य।**
**क्रव्याद्गणेषु परितः परिवारयत्सु**
**संत्रस्तया शरणमित्यसकृत्स्मृतोऽस्मि ॥ २३ ॥**

**लवः**—( अरुन्धतीं प्रति ) आर्ये कावेतौ।

**अरुन्धती**—इयं कौसल्या। अयं च जनकः।

**लवः**—( सबहुमानखेदकौतुकं पश्यति।)

**जनकः**—अहो निर्दयता दुरात्मनां पौराणाम्। अहो रामस्य राज्ञः क्षिप्रकारिता।

**एतद्वैशसवज्रघोरपतनं शश्वन्ममोत्पश्यतः**
**क्रोधस्य ज्वलितुं झटित्यवसरश्चापेन शापेन वा।**

**कौसल्या**—( सभयकम्पम् ) भअवदि परित्ताहि परित्ताहि। पसादेहि कुविदं राएसिम्। ( ख )

---

( क ) हा वत्से मुग्धचन्द्रमुखि क इदानीं ते शरीरकुसुमस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतितः।

( ख ) भगवति परित्रायस्व परित्रायस्व। प्रसादय कुपितं राजर्षिम्।

---

**महाराष्ट्राः**। **नूनं त्वया परिभवमिति** ॥ २३ ॥ **परिभवं** परित्यागरूपतिरस्कारम्। **क्रव्याद्गणेषु** मांसाशनसङ्घेषु। चद्वयमधिकम्। कालेति ध्वनिः ॥ २३ ॥ कथाप्रविष्टाविति **बहुमानः**। कथं दीनाविति **खेदः**। दैवात्पश्यामीति **कौतुकम्**। **क्षिप्रे**ति अविचार्य शीघ्रकारितेति यावत् ॥ **एतद्वैशसवज्रघोर**मिति ॥ २४ ॥ **वैशस**मेव **वज्रं** तस्य। **घोरपतनं** दारुणपातः। 'अप्रिये द्रोहे त्वपवादे च वैशसम्' इति **सारस्वतः**। **शश्वत्** मुहुः। **उत्पश्यतः** उत्प्रेक्षमाणस्य। विचारयत इति यावत्। **मम क्रोधस्य चापेन शापेन** वा करणेन **झटिति ज्वलितुमवसरः** समयः ॥ भगवति परित्रायस्व

---

**१ 'नवं' व-घ. २ 'स्मृतोऽहम्' न. ३ 'दुर्मर्यादता' व-घ. ४ 'धगित्यव०' क-च-व.**

लवः—

एतद्धि[1] परिभूतानां प्रायश्चित्तं मनस्विनाम्।

अरुन्धती—

राजन्नपत्यं रामस्ते पाल्याश्च कृपणा जनाः ॥ २५ ॥

जनकः—

शान्तं वा रघुनन्दने तदुभयं यत्पुत्र[2]भाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥ २४ ॥

(प्रविश्य।)

संभ्रान्ता बटवः—कुमार कुमार अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते सोऽयमधुनास्माभिः प्रत्यक्षीकृतः।

लवः—अश्व इति पशुसमाम्नाये साङ्ग्रामिके च पठ्यते। तद्ब्रूत कीदृशः।

बटवः—श्रूयताम्।

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रा-
न्किं वाऽऽख्यातै[3]र्व्रजति स पुनर्दूरमेह्येहि यामः ॥२६॥

---

प्रसादय कुपितं राजर्षिम् ॥ **एतद्धि परिभूतानामिति** ॥ २५ ॥ **एतत्** प्रदानमित्यर्थः। **अपत्यं** पुत्रः। यथा दशरथस्य सीता दुहिता तथा तव रामः पुत्र इति भावः। **'कृपणः क्षुद्रः'** इत्यमरः ॥ २५ ॥ **शान्तं** गतमिति यावत्। क्षान्तमिति च पाठः। न दधे न दधामि। **यत्** यस्मात्। **तत्** प्रसिद्धम्। **उभयं** सीतारामौ। **मे** मम। पुत्री च पुत्रश्च पुत्रौ तावेव भाण्डं **पुत्रभाण्डम्**। 'भाण्डं मूलवणिग्धने' इति कपिलः। वणिजा मूलधनं यथा रक्ष्यते तथा मया सीतारामौ रक्षणीयौ इति भावः। ननु अपवादकल्पकेषु जनेषु कोपो युक्त इत्याशङ्क्य सोऽपि दयनीय इत्यत्र हेतुमाह—**भूयिष्ठेति** ॥ भूयिष्ठानि भूयांसि द्विजबालवृद्धविकलस्त्रैणानि यस्मिन्। **विकलाः** अङ्गहीनादयः। **'स्त्रैणं** स्त्रीसमूहः' इति नान्दी ॥ २४ ॥ **पशुसमाम्नाये** पशुविधायकवेदे। **साङ्ग्रामिके** सङ्ग्रामसंबन्धिनि प्रकरणे इति शेषः। **पश्चात्पुच्छं वहतीति** ॥ २६ ॥ **धूनोति** कम्पयति। **शष्पाणि** बालतृणानि। **आम्रमात्रान्** आम्रप्रमाणान्। **शकृत्पिण्डकान्** मलगोलकान् ॥ २६ ॥ अश्वदर्शने कौतुकम्, सहसागमन-

---

१ एतदरुन्धतीवाक्यं **व–घ**–पुस्तकयोः. २ 'तत्पुत्र°' **व–घ**. ३ 'व्याख्यानैः' **व**.

( इत्यजिने हस्तयोश्चाकर्षन्ति । )

**लवः**—( सकौतुकापराधविनयम् । ) आर्याः पश्यत पश्यत । एभिर्नीतोऽस्मि । ( इति त्वरितं परिक्रामति । )

**अरुन्धतीजनकौ**—पूरयतु[1] कौतुकं वत्सः ।

**कौसल्या**—अरण्णगब्भरूवालावेहिं[2] तुम्हे तोसिदा अम्हे अ । भअवदि जाणामि एदं अणालोअअन्ती वञ्चिदा विअ ता अण्णदो भविअ पेक्खम्ह दाव पलाअन्तं दीहाउम् । ( क )

**अरुन्धती**—अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते ।

**कञ्चुकी**—( प्रविश्य । ) भगवान्वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति ।

**जनकः**—अतिगम्भीरमेतत्किमपि । भगवत्यरुन्धति सखि कौसल्ये आर्ये गृष्टे स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः ।

( इति निष्क्रान्तो वृद्धवर्गः । )

---

( क ) अरण्यगर्भरूपालापैर्यूयं तोषिता वयं च । भगवति जानाम्येतम- नालोकयन्ती वञ्चितेव । तदन्यतो भूत्वा प्रेक्षामहे तावत्पलायमानं दीर्घा- युषम् ।

---

प्रसक्तेरपराधः तत्क्षमापणे वा सहजो वा विनयः । एवं सर्वतो यथोचितमूह्यम् । एभिर्नीतोऽस्मीति सिद्धवत्कारेण सचमत्कारकथनाल्लवस्य गमने महानभिनिवे- इति बोध्यम् ॥ अरण्यगर्भा(र्भरूपा ?) लापैर्यूयं तोषिताः, वयं च सन्तोषित- विस्मिताश्च । भगवति जानामि एतमनवेक्षमाणा वञ्चितेव तस्मादन्यतो भूत्- पश्यामस्तावत्तं पलायमानं दीर्घायुषम् । अरण्यगर्भस्य वनमध्यस्य रूपं शोभ- येन यस्माद्वा सोऽरण्यगर्भरूपो लवः । तस्य **लापैः** उक्तिभिरित्यर्थः । 'अम्- बालभाषितम्' इति स्मरणात् । 'रूपमाकृतिसौन्दर्यशोभासु' इति संसारावर्तः एतं लवम् । **कञ्चुकीति**—पूर्वं जनकेन वाल्मीकिं प्रति प्रेषितो यः स एवा- मिति ज्ञेयम् । **आह** वदति । तदिति लवस्य वृत्तमिति विवेकः । अवसर ए- ज्ञातव्यम्, न त्विदानीमिति भावः । **किमपीति** क्रमेण विशदीभविष्यती-

---

१ 'महत्कौतुकं वत्सस्य' न. २ 'अरण्ण...अह्मे अ' एतन्नास्ति क—घ—व- पुस्तकेषु.

( प्रविश्य। )

**बटवः**—पश्यतु कुमारस्तदाश्चर्यम्।

**लवः**—दृष्टमवगतं च। नूनमाश्वमेधिकोऽयमश्वः।

**बटवः**—कथं ज्ञायते।

**लवः**—ननु मूर्खाः पठितमेव हि युष्माभिरपि तत्काण्डम्[1]। किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः, तत्प्रायमेव[2] बलमिदं दृश्यते। यदीह न प्रत्ययस्तद्गत्वा पृच्छत।

**बटवः**—भो भोः किंप्रयोजनोऽयमश्वः परिवृतः पर्यटति।

**लवः**—( सस्पृहमात्मगतम्। ) अये अश्वमेध इति नाम विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रपरिभावी महानुत्कर्षनिकषः[3]।

( नेपथ्ये। )

**योऽयमश्वः[4] पताकेयमथवा वीरघोषणा।**
**सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः॥ २७॥**

**लवः**—( सगर्वमिव[5]। ) अहो सन्दीपनान्यक्षराणि।

**बटवः**—किमुच्यते। प्राज्ञः खलु कुमारः।

---

वाक्यशेषः। **शतं संख्या** येषां **निषङ्गिणः** तूणीधराः। **तत्प्राय**मिति। तेषां कवचिप्रमुखानां प्रायः भूमा यस्मिन् तत् तत्प्रायम्। 'प्रायो भूम्नि' इत्यमरः। **इदं** रक्षकसैन्यमिति यावत्। किं प्रयोजनं यस्य **किंप्रयोजनः**। **स्पृहा** समरेच्छा। **ऊर्जस्वलः** ऊर्जोऽतिशयान्वितः। **सर्वे** स्वस्मादितरे च ते **क्षत्रियाः**। **निकषः** शाणः, घर्षणसाधनशिला। 'सहण' इति **महाराष्ट्राः**। **योऽयमश्वः पताके**ति॥ २७॥ **योऽश्वः अयं**। **इय**मिति वीरघोषणायां च योज्यम्। 'वीरवादार्थैटी वीरघोषणा' इति हैमः। अथो विद्यमानाः **सप्तलोकाः** ऊर्ध्वं च सप्त लोकाः आहत्य चतुर्दशभुवनानीति भावः॥ २७॥ **सन्दीपनानि** सन्तापकारीणि इति यावत्। 'हीनसंबोधने तु रे' **इत्यमरः**।

---

१ 'तत्काण्डे' **क–घ–व.** २ 'तत्प्रायमेवान्यदपि' **व.** ३ 'निष्कर्षः' **क–घ–व.** ४ 'अयमश्वः' **क–घ–व.** ५ 'सव्यथमिव' **व–घ.**

**लवः**—भो भोः, तत्किमक्षत्रिया पृथिवी यदेवमुद्घोष्यते ।

( नेपथ्ये । )

रे रे महाराजं प्रति कुतः क्षत्रियाः ।

**लवः**—धिग्जाल्मान् ।

**यदि ते[1] सन्ति सन्त्येव केयमद्य[2] विभीषिका ।**
**किमुक्तैरेभिरधुना[3] तां पताकां हरामि वः ॥ २८ ॥**

भो भो बटवः परिवृत्य लोष्टैरभिघ्नन्तो नयतैनमश्वम् । एष रोहितानां मध्ये वराकश्चरतु ।

( प्रविश्य सक्रोधदर्पः )

**पुरुषः**—धिक्चापलं किमुक्तवानसि । तीक्ष्णतरा[4] ह्यायुधीय[5]श्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते । राजपुत्रश्चन्द्रकेतुर्दुर्दान्तः[6]। सोऽप्यपूर्वारण्य[7]दर्शनाक्षिप्तहृदयो न यावदायाति तावत्त्वरितमनेन तरुगहनेनापसर्पत ।

**बटवः**—कुमार कृतमनेनाश्वेन । तर्जयन्ति विस्फुरितशस्त्राः[8] कुमारमायुधीयश्रेणयः । दूरे चाश्रमपदमितस्तदेहि हरिणप्लुतैः पलायामहे ।

**लवः**—( विहस्य ) किं नाम विस्फुरन्ति शस्त्राणि । ( इति धनुरारोपयन् । )

---

'भयोत्पादनहेतुर्या प्रतिमा सा **विभीषिका**' इति केदारः । **अभिघ्नन्तः** पशुसाधारणमिति भावः । **रोहितानां** मृगशीर्षाणाम् । पृष्ठतः **मध्ये** वा । **वराकः** अधमः । पुरुषः राक्षससैन्यस्य इति बोध्यम् । **आयुधीयानां** शस्त्राजीवानाम् । '**श्रेणिः** श्रेणी' इति द्विरूपः । 'दुर्दाण्ड(न्त?)श्चण्डविक्रमः' इति हेमचन्द्रः । **न परापतति** नाभिवर्तते । 'तरुभिर्गहनं कलिले वने' इति धवनिमञ्जरी । **प्लुतैः** उड्डीनविशेषैः । **शस्त्राणि** आयुधानि । करुणरसातिशयेन

---

१ 'नो' न. २ 'केयमन्या' घ–व. ३ 'किमुक्तैः संनिपत्यैव' व; 'किमुक्तैः शरसम्बाधाम्' घ. ४ 'नीरसाः' क–व–व. ५ 'आयुध' न. ६ 'अरिविमर्दनः' क–घ–व. ७ 'सौम्यपूर्वारण्य०' व–घ. ८ 'विस्फारितशरासनाः' न.

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मु[1]द्धारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बि विकटोदरमस्तु चापम् ॥ २९ ॥

( इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे । )

चतुर्थोऽङ्कः ।

---

चिरादतिसंकोचं वहन् कविः प्रकरणवशादेव वीररसाङ्कुरमुद्भावयति—**ज्याजिह्वया वलयिते**ति ॥ २९ ॥ **ज्यैव जिह्वा** तया **वलयिते** आवेष्टिते **उत्कटे** मत्ते **कोटी** अग्रे एव **दंष्ट्रे** यस्य । **उत्ता(द्धा ?)[1]री** उदयन् **घोरः** भयङ्करः **घनः** सान्द्रः **घर्घरः** घोषः यस्य । गम्भीरे घर्घर इति भावः । **विकटं** कुटिलं दुर्भरमिति यावत् । **उदरं** अन्तरालं यस्य । एतत् **चापम्** । 'धन्वकार्मुकचापानि' इति जयः । **ग्रासे** जगत्कवलने **प्रसक्तः** तत्परः । **हसन्** अट्टहासं कुर्वन् यः **अन्तकः** तस्य **वक्त्रमेव यन्त्रं** विभीषिकामुखम् तस्य **जृम्भा** तां विडम्बयतीति **विडम्बि** । 'जृम्भस्तु त्रिषु' इत्यमरः । **अस्तु** । तथा च एतेषामायुधीयानां शस्त्रविष्फारः मम ईदृशस्य चापस्य पुरतः कियानिति भाव इत्यलमतिविस्तरेण ॥ २९ ॥ इति महाराजपद + उत्तररामचरितसंजीवनाख्यटिप्पणे चतुर्थोऽङ्कस्समाप्तः ॥

॥ इति चतुर्थोऽङ्कः ॥

---

१ 'उद्धूरि' न. + प्रथमाङ्कटीकासमाप्तौ टीकाकृता यदात्मवृत्तं निवेदितं तदत्राप्यनुसन्धेयम् ।

## पञ्चमोऽङ्कः ।

( नेपथ्ये । )

भो भोः सैनिका जातं जातमवलम्बनमस्माकम् ।

नन्वेष त्वरितसुमन्त्रनुद्यमान-
प्रोद्वेल्लत्प्रजवितवाजिना रथेन ।
उत्खातप्रचलितकोविदारकेतुः
श्रुत्वा वः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

( ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुतहर्षसंभ्रमश्चन्द्रकेतुः )

**चन्द्रकेतुः**—आर्य सुमन्त्र पश्य पश्य ।

किरति कलितकिंचित्कोपरज्यन्मुखश्री-
रविरतगुणगुञ्जत्कोटिना कार्मुकेन ।
समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ २ ॥

---

अथ कविरिह पञ्चमाङ्के लवचन्द्रकेतुसंवादं वर्णयिष्यन् शाकुन्तलादिकतिपयाङ्कस्थलवत् कथागाद्यन्याभावात्प्रवेशादिकमङ्गमन्तरेणैव चतुर्थाङ्कपूर्तिसन्नद्धलवसमारम्भसङ्गतिमसुञ्चन्नेव तदनुरूपं, 'साक्षात्पात्रप्रवेशो वा नेपथ्याकाशभाषितैः' इति रूपकादर्शोक्तन्यायानुसारेण चन्द्रकेतुप्रवेशसूचनमङ्करयति—**नेपथ्ये** इति । **अस्माकमिति** अस्मत्सेनाया इति च पाठौ साधीयांसौ । अस्मत्सैनिकानामिति भ्रान्तः पाठः । भो भोः सैनिका इति संबोधनासङ्गतेः ॥ कथमवलम्बनमित्याशङ्कयाह—**नन्वेष त्वरितेति** ॥१॥ **सुमन्त्रेण नुद्यमानः** प्रेर्यमाणः । **प्रोद्वेलन्** कम्पमानः **प्र**कर्षेण **जविताः** संजातजवाः **वाजिनः** यस्य । तथा च नुद्यमानस्सन् प्रोद्वेल्लंश्चासौ प्रजवितवाजी च तेन रथेन उपलक्षितः । **उत्खाते प्रचलितः** तरलितः **कोविदार** एव **केतुः** ध्वजः यस्य । 'उत्खाते विषमे देशे' इति, 'कोविदारे चमरुकः' इति **शब्दमालाधन्वन्तरी । सपदि** झटिति । 'बाले च युवराजे च कुमारः' इति संसारावर्तः । पूर्वार्धे यमकभङ्गः एकाक्षरप्रासः ॥ १ ॥ सुमन्त्रः सारथिः यस्मिन् ॥ **किरति कलितकिञ्चिदिति** ॥ २ ॥ **कलितः** प्राप्तश्चासौ **किञ्चित्कोपः** अल्पक्रोधः तेन **रज्यन्ती मुखश्रीः** यस्य । **प्रवितततः गुणः** मौर्वी यस्य । घण्टाभिर्**गुञ्जन्ती** शब्दायमाना **कोटिः** यस्य । प्रविततगुणं च तत् गुञ्जत्कोटि च । **चञ्चन्त्यः** चञ्चलाः **पञ्च चूडाः** संयतकेशाः यस्य । 'चञ्चत्पटैः केतुभिः' इति मूकः । **शरा** एव **तुषाराः** नीहाराः । **वीरस्य पोतः** अर्भकः ।

---

१ 'व्याक्लत्प्रजवन' क-घ-व; 'प्रोद्वल्गत्' न. २ 'उद्धात' क-घ-व. ३ 'अनवरतनिगुञ्जत्' घ-व; 'प्रवितत' टी.

आश्चर्यमाश्चर्यम् ।

मुनिजनशिशुरेकः सर्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः ।
दलितकरिकपोलग्रन्थिटङ्कारघोर-
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ३ ॥

सुमन्त्रः—आयुष्मन्

अतिशयितसुरासुरप्रभावं
शिशुमवलोक्य तथैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

चन्द्रकेतुः—मैम त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते ।

अयं हि शिशुरेकको मदभरेण भूरिस्फुर-
त्करालकरकन्दलीजटिलशस्त्रजालैर्बलैः ।

वीरश्चासौ वा । संप्रकोपादित्यत्र उपसर्गौ पादपूरकौ इति केचित् । वृथेत्यन्ये । हन्त कोपादिति वा पाठः ॥ २ ॥ मुनिजनशिशुरिति ॥ ३ ॥ प्ररोहः अङ्कुरः । दलिताः भेदिताः करिकपोलग्रन्थयः यैः । 'ग्रन्थिर्मर्मणि च' इति हैमः । टङ्काराः घोराः येषु । दलितकरिकपोलग्रन्थय एव टङ्कारघोराः सन्तः । ज्वलिताश्च ते शराश्च तेषाम् ॥ ३ ॥ अतिशयितसुरासुरेति ॥ ४ ॥ अतिशयितः सुरासुरेभ्योऽपि प्रभावः यस्य । तथैव रामस्येति भावः । द्विषां मारीचादीनाम् । प्रमाथे हिंसने ॥ ४ ॥ अयं हि शिशुरिति ॥ ५ ॥ एककः एकः । भूरि स्फुरन्त्यः वीरलक्ष्म्याः भूयः शोभमानाः कराला: दुष्प्रेक्षाः याः करकन्दल्यः करसंपुटानि तेषु जटिलानि निबिडानि शस्त्राणां आयुधानां जालानि समूहाः येषाम् । 'दुर्दर्शे करालः' इति, 'कदली संपुटे पुटे कन्दः' इति, 'जटिलो निबिडार्थः' इति हारावली-

१ 'संप्रकोपात्' न–टी. २ '°प्रसिद्धिप्ररोहः' न. ३ '०घोरं' व. ४ 'तवैव' व–घ. ५ 'इममेक०' व–घ. ६ 'समरभारभूमि०' क–घ–व. ७ 'कलित' क–घ–व.

क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदडामरैरावृतः ॥ ५ ॥

**सुमन्त्रः**—वत्स एभिः समस्तैरपि किमस्य किं पुनर्व्यस्तैः ।

**चन्द्रकेतुः**—आर्य त्वर्यतां त्वर्यताम् । अनेन हि महानाश्रित-जनप्रमारोऽस्माकमारब्धः । तथा हि ।

आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवं
तृप्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥ ६ ॥

**सुमन्त्रः**—( स्वगतम् । ) कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसंप्रहारमनुजानीमः । ( विचिन्त्य । ) अथवा इक्ष्वाकुकुलवृद्धाः खलु वयम् । प्रत्युपस्थिते रणे च का गतिः ।

---

कपिलशब्दार्णवाः । **किङ्किणी**भिः क्षुद्रघण्टाभिः **घणघणायिताः स्यन्दनाः** रथाः येषाम् । **अमन्दं** महत् । **मदा एव दुर्दिनं** येषां ते च ते **द्विरदाः** गजाः तैः **डामराणि** उद्धतानि । दुर्दिनमिति नैल्यधाराक्षरणात्मकार्थद्वयाभिप्रायकम् । 'मेघच्छन्नेऽह्नि दुर्दिनम्' इति, 'उद्धते डामरं त्रिषु' इत्यमरविक्रमार्कौ । **बलैः** सैन्यैः । 'तुल्यबुद्धौ समभरः' इति **नन्दी** । **आवृतः** आक्रान्तः । सादिनोऽप्येतदन्तर्भूता इति भावः । शिशुरेकेति ध्वनिः ॥ ५ ॥ **समस्तै**र्मिलितैः । **व्यस्तैः** भिन्नैः । **एभिः** बलैः । **आश्रितजनाः** अनुचरलोकाः तेषां **प्रमारः** प्रकर्षेण मारणम् ॥ **आगर्जद्गिरी**ति ॥ ६ ॥ **आ** समन्तात् । **घटासु निस्तीर्णः** अवतीर्णः । **कर्णेभ्यः ज्वरः** असभ्यत्वरूपः सन्तापः येन । विस्तीर्ण इति पाठे विशाल इत्यर्थः । **आध्मातं** पूरितम् । **वेल्लदि**ति । 'प्रेङ्खद्दारुणरुण्डानां अकबन्धं शिरोरुण्डम्' इति समासः । **तृप्यन्** यः **कालः** यमः तस्य **करालवक्त्रस्य विघसेन** 'करालो दन्तुरे तुङ्गे' इति, 'विघसो भोजनशेषः' इत्यमरकेदारौ ॥ ६ ॥ **संप्रहारं** युद्धं । केति (?) रणं कर्तव्यमेवेति भावः । लवस्य पराक्रमाधिक्याद्विस्मयलज्जासंभ्रमाः ।

---

१ 'वारिदैः' क–घ–व. २ 'प्रमाथः' क–घ–व. ३ 'आगुञ्जत्' व–घ. ४ 'विस्तीर्णं' व–घ. ५ 'ज्वरज्या०' न. ६ 'खण्ड' न. ७ 'भुवः' घ–व. ८ 'तृप्यत्' न–क.

**चन्द्रकेतुः**—( सविस्मयलज्जासंभ्रमम्। ) हन्त धिक्। अपावृत्तान्येव सर्वतः सैन्यानि मम।

**सुमन्त्रः**—( रथवेगमभिनीय। ) आयुष्मन्, एष ते वाग्विषयीभूतः स वीरः।

**चन्द्रकेतुः**—( विस्मृतिमभिनीय। ) आर्य किमस्य नामधेयमाख्यातमाह्वायकैः[1]।

**सुमन्त्रः**—लव इति।

**चन्द्रकेतुः**—

**भो भो लव महाबाहो किमेभिस्तव सैनिकैः।**
**एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ७ ॥**

**सुमन्त्रः**—कुमार पश्य पश्य।

**विनिवर्तित[2] एष धीरपोतः**
**पृतनानिर्मथनात्त्वयोपहूतः।**
**स्तनयित्नुरवादिभावलीना-**
**मवमर्दादिव दृप्तसिंहशावः ॥ ८ ॥**

( ततः प्रविशति धीरोद्धतपरिक्रमो लवः। )

**लवः**—साधु राजपुत्र साधु। सत्यमैक्ष्वाकः खल्वसि। तदहं परागत एवास्मि।

( नेपथ्ये महान्कलकलः। )

**लवः**—( सावष्टम्भं परावृत्य। ) आः कथमिदानीं भग्ना अपि प्रतिनिवृत्य युद्धाभिसारिणः पर्यवष्टम्भयन्ति मां चमूपतयः। धिग् जाल्मान्।

---

**अपावृत्तानि** परावृत्तानि। **वागिति**–संप्रति संलापाय सन्निकृष्ट इत्यर्थः। इतिकार आबा(बो?)धक इति त्रिकाण्डी ॥ **विनिवर्तित एष** इति ॥ ८ ॥ **पृतना** सेना। **स्तनयित्नुः** मेघः। **अवमर्दः** मर्दनम्। **शावः** शिशुः ॥८॥ **परागतः** प्रतिनिवृत्यागत इति यावत्। '**अवष्टम्भो** गर्वः' इति रत्नमाला। परितः स्थिरीभवतीति यावत्। **मामुद्दिश्य**। 'जाल्मोऽसमीक्ष्यकारी' इत्यमरः।

---

१ 'आख्यायकैः' **व–घ.** २ 'व्यपवर्तत' **व–घ.**

अयं शैलाघातक्षुभितवडवावक्त्रहुतभु-
क्प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे ।
समन्तादुत्सर्पन्घनतुमुलहेलाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

( सवेगं परिक्रामति । )

**चन्द्रकेतुः**—भो भोः कुमार

अत्यद्भुतादसि गुणातिशयात्प्रियो मे
तस्मात्सखा त्वमसि यन्मम तत्तवैव ।
तत्किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

**लवः**—( सहर्षसंभ्रमं परावृत्य । ) अहो महानुभावस्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्तनकुलकुमारस्य । तत्किमेभिरेनमेव तावत्सम्भावयामि । ( पुनर्नेपथ्ये कलकलः । )

**लवः**—( सक्रोधनिर्वेदम् । ) आः कदर्थितोऽहमेभिर्वीरसंवादविघ्नकारिभिः पापैः । ( तदभिमुखं परिक्रामति । )

**चन्द्रकेतुः**—आर्य आर्य दृश्यतां द्रष्टव्यमेतत् ।

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ११ ॥

**सुमन्त्रः**—कुमार एवैनं द्रष्टुमपि जानाति । वयं तु केवलं परवन्तो विस्मयेन ।

---

**अयं शैलाघात** इति ॥ ९ ॥ **आघातः** आघट्टनम् । तेन **क्षुभिता** या **वडवा**, 'अश्वा वडवे'त्यमरः । **निचयः** समूहः । 'अतुलं (तुमुलं ?) रणसङ्कुले' इति, 'हेला विलासः' इति, 'ओघः प्रवाहजवयोः' इति चामरः । **आस्फालितः** उद्धूतः ॥ ९ ॥ **अत्यद्भुतादसी**ति ॥ १० ॥ **कदनं** व्यापादनम् ॥ १० ॥ **कदर्थितः** व्यर्थीकृत इति यावत् ॥ **दर्पेण कौतुकवते**ति ॥ ११ ॥ **उदीर्णं** उद्धतम् । **माघवतं** ऐन्द्रम् । **लक्ष्मीं** शोभाम् ॥ ११ ॥

---

१ 'बल' व–घ. २ 'सेना' क–व.

**चन्द्रकेतुः**—भो भो राजानः

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन्कवचनिचितैर्मध्यचर्मोत्तरीये[1] ।
कालज्येष्ठैरभिनववयःकाम्यकाये[2] भवद्भि-
र्योऽयं बद्धो युधि समभरस्तेन[3] धिग्वो धिगस्मान् ॥ १२ ॥

**लवः**—( सोन्माथम् । ) आः कथमनुकम्पते नाम । ( विचिन्त्य । ) भवतु । कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत्सैन्यानि संस्तम्भयामि । ( इति ध्यानं नाटयति । )

**सुमन्त्रः**—तत्किमकस्माद्स्मत्सैन्यघोषः प्रशाम्यति ।

**लवः**—पश्याम्येनमधुना प्रगल्भम् ।

**सुमन्त्रः**—( ससंभ्रमम् । ) वत्स मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितमिति ।

**चन्द्रकेतुः**—अत्र कः सन्देहः ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते
नियतमजितवीर्यं[4] जृम्भते जृम्भकास्त्रम् ॥ १३ ॥

---

**परवन्तः** पराधीनाः । **संख्यातीतै**रिति ॥ १२ ॥ 'पदातः (?) पदातयः' इत्यमरः । **तत्र** तस्मिन् लवे । **निचितैः** । 'कालो वत्सरेऽपि' इति केशवः । **अपरं** बाल्यं । **तेन** सम(भ ?)रेण तुल्यबुद्ध्या ॥१२॥ **उन्मादः** चित्तविभ्रमः । **कालहरणं** विलम्बः । तस्य **प्रतिषेधः** निषेधः । **अकस्मात्** अहेतोः । सहसा वा । **एनं** चन्द्रकेतुम् । परिहासोक्तिरियम् । तदेव स्पष्टयति— **व्यतिकर इव भीम** इति ॥ १३ ॥ **भीमः** घोरः तमसोऽयं **तामसः** । विद्युतः अयं **वैद्युतः** । **व्यतिकरः** संबन्धः । **प्रणिहितं** प्रणिधानगतं विषयैकनिष्ठमपीति यावत् । **चक्षुः** कर्म । **ग्रस्तमुक्तं** तामसो व्यतिकरः ग्रस्तं सत् स्वने(?)त्युभयत्र शेषः । वैद्युतः मुक्तं सत् हिनस्ति वेति बोध्यम् । **अस्पन्दं**

---

१ 'नद्ध' न. २ 'अपरवयसि ख्यातिकामैः' न. ३ 'परिकरः' इति क-घ-व. ४ 'अमित' क.

आश्चर्यमाश्चर्यम् ।

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवस्तीर्यते
मीलन्मेघतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

**सुमन्त्रः**—कुतः पुनरस्य जृम्भकाणामागमः स्यात् ।

**चन्द्रकेतुः**—भगवतः प्राचेतसादिति मन्यामहे ।

**सुमन्त्रः**—वत्स नैतदेवमस्त्रेषु विशेषतो जृम्भकेषु । यतः ।

कृशाश्वतनया ह्येते कृशाश्वात्कौशिकं गताः ।
अथ तत्संप्रदायेन रामभद्रे स्थिता अपि ॥ १५ ॥

**चन्द्रकेतुः**—अपरेऽपि प्रचीयमानसत्त्वप्रकाशाः स्वयं सर्वे मन्त्रदृशः पश्यन्ति ।

**सुमन्त्रः**—वत्स सावधानो भव । परागतस्ते प्रतिवीरः ।

**कुमारौ**—( अन्योन्यं प्रति । ) अहो प्रियदर्शनः कुमारः । ( सस्नेहानुरागं निर्वर्ण्य । )

---

निश्चलम् । **आस्ते** तस्मादिति शेषः ॥ १३ ॥ **पातालोदरे**ति ॥ १४ ॥ **पातालेति** श्यामत्वातिशयद्योतकम् । **जृम्भकैः** जृम्भकास्त्रैः । पूजायां बहुत्वम् । 'रीतिः स्त्रियामारकूटं' इति, 'कडारः कपिलः' इति चामरः । **आरकूटं** 'पित्तल' इति **महाराष्ट्राः** । **ज्योतिर्वत् ज्वलन्ती दीप्तिः** येषां तानि । **कल्पः** प्रलयः तस्य **आक्षेपे** आग्रहे । दारुण**मरुता व्यस्तैः** भिन्नैः । **तडिद्भिः कडाराणि कुहराणि** बिलानि येषां ते । **कूटैः** शिखरैरिव । **अवस्तीर्यते** आस्तीर्यते ॥ १४ ॥ **आगमः** प्राप्तिः । **एते** जृम्भकादयोऽस्त्रविशेषाः ॥ **कृशाश्वतनया** इति ॥ १५ ॥ **कृशाश्वस्य** ऋषेः । **तस्मात् कौशिकात्** । **संप्रदायेन** शिष्यक्रमेण । एकपदमेतत् ॥ १५ ॥ **परं** भृशम् । उपेति वर्धमानव्यत्याश्चर्यैः(?) 'प्रकाशोऽतिप्रसिद्धेऽपि' इत्यमरः । 'ऋषियोगी च मन्त्रकृत्' इति लिङ्गानुशासनम् । **स्वयं सर्वे पश्यन्ति** । एतेन कृशाश्वकौशिकादिवत् प्राचेतसादीनामपि अस्त्रप्रवर्तकत्वप्रसक्तिरुक्ता भवतीत्यवधेयम् ।

---

१ 'अभिस्तीर्यते' न; 'अवास्तीर्यते' घ. २ 'भृशाश्व' न. ३ 'परमोपचीयमान' घ–च. ४ '०गतः प्रवीरः' क–घ–च.

यदृच्छासंवादः किमु किमु गुणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥ १६ ॥

सुमन्त्रः—भूयसा जीविधर्म एष यद्रसमयी कस्यचित्क्वचित्प्रीतिः, यत्र लौकिकानामुपचारस्तारामैत्रकं चक्षूराग इति । तमप्रतिसंख्येयमनिबन्धनं प्रेमाणमामनन्ति ।

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति ॥ १७ ॥

कुमारौ—( अन्योन्यमुद्दिश्य । )

एतस्मिन्मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।

---

**ते** तुभ्यम् । **कुमारौ** लवचन्द्रकेतू ॥ **यदृच्छासंवाद** इति ॥ १६ ॥ **यदृच्छया** स्वैरम् **संवादः** संलापः किमु । **निजः** नित्यः परिचयो वेति पूर्वेण योज्यम् । **अविदितः** संबन्धः किमु । कुत एवमत आह—**ममेति** । **अवधानं** अनन्यवृत्तित्वम्, कर्म । **हृदयं** परवशीभवतीति भावः ॥ १६ ॥ 'द्रवे रसः' इत्यमरः । प्रीतिरिति यत् एष धर्म इत्यन्वयः । **यत्र** प्रीतिविषये । **लौकिकानां** वैदिकमार्गानभिज्ञानाम् । **उपचारः** आदरणमात्रमित्यर्थः ॥ अथ वैदिकमर्थं विवृणोति—**तारे**ति । तारैव तारका । 'तारकाक्ष्णः कनीनिका' इति 'मैत्रं मैत्री च सख्यं च' इत्यमररत्नकारौ । **चक्षुषोः रागः** । न रागः उभयत्र दर्शनं लक्ष्यते । **तत्** प्रसिद्धम् । **अप्रतिसन्धेयं** अवञ्चनीयम् । **निबन्धनं** शास्त्रम् । **प्रमाणमामनन्ति** । वैदिका इति शेषः । 'प्रतिसन्धानमि-(म?)तिसन्धानं द्वे वञ्चनार्थके' इति **रुद्रः** ॥ **अहेतुः पक्षपात** इति ॥ १७ ॥ **पक्षपातः** ममता । मैथिलीपक्षपातेनेत्यस्मद्व्याख्यातचम्पौ । **प्रतिक्रिया** आक्षेपः **स** पक्षपातः प्रेमस्वरूपम् । सूत्रं कर्तृ । **भूतानि** प्राणिनः कर्म । **अन्तः** आत्मनि **सीव्यति** स्यूतान् करोतीत्यर्थः ॥ १७ ॥ **एतस्मिन्मसृणितेति** ॥ १८ ॥ **मसृणितं** च तत् **राजपट्टाय** साम्राज्याय **कान्तं**

---

१ 'किमु गुणगणानाम्' **न.** २ 'बन्धः' **व–घ.** ३ 'भूयसा जीविनामेव धर्म एष यत्र स्वरसमयी' **न.** ४ 'व्याहारः' **व.** ५ 'तदप्रतिसंख्येयनिबन्धनं प्रमाणम्' **न.** ६ 'अन्तर्मर्माणि' **क–घ–व.**

यत्प्राप्तौ मम परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्बमङ्गमास्ते ॥ १८ ॥

किं त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः ।
किं वक्ष्यत्ययमेव युद्धविमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

**सुमन्त्रः**—( लवं निर्वर्ण्य सास्रमात्मगतम् । ) हृदय किमन्यथा परिप्लवसे[१] ।

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम्[२] ।
लतायां पूर्वलूनायां प्रसवस्योद्भवः[३] कुतः ॥ २० ॥

**चन्द्रकेतुः**—अवतराम्यार्य सुमन्त्र स्यन्दनात् ।

**सुमन्त्रः**—तत्कस्य हेतोः ।

**चन्द्रकेतुः**—एकैतस्तावदयं[४] वीरपुरुषः पूजितो भवति । अपि च खल्वार्य क्षात्रधर्मः समनुगतो[५] भवति । न रथिनः पादचारमभियुञ्जन्तीति शास्त्रविदः परिभाषन्ते ।

**सुमन्त्रः**—( स्वगतम् । ) आः कष्टां दशामनुप्रपन्नोऽस्मि ।

कथं न्याय्यमनुष्ठानं[६] मादृशः प्रतिषेधतु ।
कथं वाभ्यनुजानातु साहसैकरसां क्रियाम् ॥ २१ ॥

---

मनोज्ञं तस्मिन् । **यस्य** शरीरस्य । **प्राप्तौ** लाभे । **उन्मीलत्पुलकानां कदम्बं** समूहः यस्मिन् । उन्मीलन्ति पुलका एव कदम्बानि नीपपुष्पाणि यस्मिन्निति वा । 'अङ्गं वपुष्यवयवे' इति रत्नाकरः ॥ १८ ॥ ननु यथेच्छमालिङ्ग्यतां, मास्तु शस्त्रयुद्धम्, अस्तु वा बाहुयुद्धम्, इत्याशङ्क्याह **किन्त्वाक्रान्तेति** ॥ १९ ॥ **किन्तु आक्रान्ताः** अभिभूताः **कठोरतेजसः** शूराः येन तस्मिन् लव इति यावत् । **यस्य** शस्त्रस्य यस्य ममेति वा शेषः । **ईदृश** इति षष्ठीप्रथमैकवचनम् । 'संकेतशपथाचारसिद्धान्ताः समयाः' इति धनञ्जयः ॥ १९ ॥ **परिप्लवसे** चलसि ॥ **मनोरथस्य यदिति** ॥ २० ॥ **बीजं** सीतेत्यर्थः । **प्रसवः** पत्रादिः ॥ २० ॥ **पादाभ्यां चारः** संचारः यस्य ॥ **कथं हीदमनुष्ठानमिति** ॥ २१ ॥ **अनुष्ठानं** आचरणम् । **मादृशः** अनभिज्ञ इति यावत् ।

---

१ 'परिकल्पसे' क–घ–व. २ 'हतम्' व. ३ 'प्रसूनस्यागमः' व–घ. ४ 'एकस्तावत्' न; 'यतस्तावत्' घ–व. ५ 'परिपालितः' न; 'सम्यगनुगतः' व; 'अनुगृहीतः' व. ६ 'कथं हीद०' न.

**चन्द्रकेतुः**—यदा तातमिश्रा अपि पितुः प्रियसखमर्थसंशये-ष्वार्यमेव पृच्छन्ति तत्किमार्यो विमृशति ।

**सुमन्त्रः**—आयुष्मन्, एवं यथाधर्ममभिमन्यसे ।

एष साङ्ग्रामिको न्याय एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥ २२ ॥

**चन्द्रकेतुः**—अप्रति[१]रूपं वचनमार्यस्य ।

इतिहासं पुराणं च धर्मप्रवचनानि च ।
भवन्त एव जानन्ति रघूणां च कुलस्थितिम् ॥ २३ ॥

**सुमन्त्रः**—( सस्नेहास्रं परिष्वज्य )

जातस्य ते पितुरपीन्द्रजितो नि[२]र्हन्तु-
र्वत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुतिष्ठति वीरधर्मं[३]
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ॥ २४ ॥

**चन्द्रकेतुः**—( सकष्टम् )

अप्रतिष्ठे रघु[४]ज्येष्ठे का प्रतिष्ठा कुलस्य नः ।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥ २५ ॥

**सुमन्त्रः**—अहह हृदयमर्मदारणान्येव चन्द्रकेतोर्वचनानि ।

**लवः**—हन्त मिश्रीकृ[५]तो रसक्रमो वर्तते ।

---

प्रतीति समानयुद्धस्य न्याय्यत्वादिति भावः । रणमुखे यानादवतरणमेव साहस-मिति भावः । अनुष्ठानं क्रियामिति च ध्वनी । अत्र हिकारावजागलस्तनौ ॥२१॥ **मिश्रा** इत्यत्र पादा इति च पाठः । रामादय इत्यर्थः । **पितुः** दशरथस्य । **विमृशति** विचारयति । **अनुरुध्यसे** अनुवर्तसे ॥ **एष साङ्ग्रामिक** इति ॥ २२ ॥ **सनातनः** नित्यः । 'चरित्रमपि चारित्रम्' इति द्विरूपः ॥ २२ ॥ **अप्रतिरूपं** असमानम् ॥ **इतिहासं पुराण**मिति ॥ २३ ॥ **इतिहासं** पुरावृत्तम् ॥२३॥ **जातस्य ते पितु**रिति ॥२४॥ **तस्य** लक्ष्मणस्य । **अपत्यं** चन्द्रकेतुः । **प्रतिष्ठां** कीर्तिम् । गतमिति ध्वनिः ॥ २४ ॥ **अप्रतिष्ठे कुल-ज्येष्ठे** इति ॥ २५ ॥ **रघवः** दशरथादयः ज्येष्ठा यस्य । 'ज्येष्ठोऽतिशस्तः' इत्यमरः । रघुभ्यः भरतलक्ष्मणशत्रुघ्नेभ्य इति वाऽर्थः । रघुश्रेष्ठे इति च पाठः । **अप्रतिष्ठे** अपवादादिति भावः । तुर्यपादे ध्वनिः ॥ २५ ॥ **रसयोः**

---

१ 'प्रतिरूप' व–घ. २ 'विजेतुः' व–घ. ३ 'वृत्तं' व–घ.
४ 'कुलज्येष्ठे' क–घ–न. ५ 'मिश्रीकृतक्रमो रसो' न; 'रसः' व.

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन्दृष्टिर्मम कलहकामः पुनरयम्।
रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्बणरसः ॥ २६ ॥

चन्द्रकेतुः—( अवतरणं रूपयन्। ) आर्य सौवित्रश्चन्द्रकेतुरभिवादयते।

सुमन्त्रः—अहितस्यैव पराजयाय महानादिवराहः कल्पताम्।

अपि च।

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता
त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि।
ऐन्द्रावैष्णवमाग्निमारुतमथो सौपर्णमोजोस्तु ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ २७ ॥

---

शान्तवीरयोः। **क्रमो** रीतिः। शान्तिं वर्णयति—**यथेन्दावानन्द**मिति ॥ २६ ॥ **समुपोढे** उदिते। **अस्मिन्** चन्द्रकेतौ। वीररसं वर्णयति—**कलहकाम** इति। अयमसौ। **रणत्कारः** शब्दानुकारः। तेन **क्रूरं क्वणितं** शब्दः यस्य तादृग्गुणः मौर्वी यस्य घण्टासाधनेन **गुञ्जद् गुरु** अलघु यत् **धनुः** गुणं च तद्धनुः। तस्मिन् **धृतप्रेमा**। **विकचाः** स्फुटाः **विकरालाः** विशेषेण भयङ्कराः **व्रणाः** व्याघातसंभवाः **मुखे** तले यस्य। 'मार्गमध्यस्थयोः सन्धिविशेषतलयोर्मुखम्' इति लिङ्गानुशासनम्। बाहुः स्फुरतीति शेषः ॥ २६ ॥ **अहितस्य** शत्रोः **एव**कारेण लवो व्यावर्त्यते। तस्याहितत्वाभावादिति दैवसिद्धं बोध्यम्। **पराजयं** भङ्गम्। **महान्** पूज्यः। **आदिवराहः** वराहावतारो विष्णुः ॥ 'दार्ढ्यमर्काच्छ्रियं शक्रात्सत्यं रामाद्गुरोर्मतिम्। पराजयममित्राणां प्रार्थयेदादिकालतः ॥' इति स्मरणात् ॥ **देवस्त्वां सविते**ति ॥ २७ ॥ **धिनोति** प्रीणयतीति **माठरः**। **मैत्रावरुणः** वसिष्ठः। **ते** तव **गुरूणां** पित्रादीनाम्। **गुरुः** पुरोहितः। 'अथागस्त्यवसिष्ठयोर्मैत्रावरुणिमैत्रावरुणौ' इति **केदारः**। 'मङ्गलेष्वथो अथ' इति धरणिः। इन्द्राविष्ण्वोरिदं **ऐन्द्रावैष्णवम्**। अग्निमरुतोरिदं **आग्निमारुतम्**। सुपर्णस्येदं **सौपर्णम्**। **ओजः** तेजः। **ते** तुभ्यम्। **अस्तु**। इन्द्राविष्णू इत्यादिश्रुतिरूढ्या। **ज्याघोष एव मन्त्रः**। **जयं** च **देयादेव**। रामलक्ष्मणेत्यनेन लवचन्द्रकेत्वोरुभयोरपि जय

---

१ 'विकरालव्रणमुखः' न-टी. २ 'ऐक्ष्वाकः' न. ३ अस्य स्थाने 'अजितं पुण्यमूर्जस्वि ककुत्स्थस्येव ते महः। श्रेयसे शाश्वतो देवो वराहः परिकल्पताम्' ॥२७॥ इति क-घ-च-पुस्तकेषु. ४ 'पतिः' न. ५ 'ऐन्द्रं वैष्णवम्' व-घ.

लवः—कुमार अति हि नाम शोभसे रथस्थ एव । कृतं कृतमत्यादरेण ।

चन्द्रकेतुः—तर्हि महाभागोऽप्यन्यं रथमलङ्करोतु ।

लवः—आर्य प्रत्यारोपय रथोपरि राजपुत्रम् ।

सुमन्त्रः—त्वमप्यनुरुध्यस्व वत्सस्य चन्द्रकेतोर्वचनम् ।

लवः—को विचारः स्वेषूपकरणेषु । किं त्वरण्यसदो वयमनभ्यस्तरथचर्याः ।

सुमन्त्रः—जानासि वत्स दर्पसौजन्ययोर्यथोचितमाचरितुम्[1] । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदा तस्य स्नेहेन हृदयमभिष्यन्देत ।

लवः—आर्य सुजनः स राजर्षिः श्रूयते । ( सलज्जमिव । )

[2]वयमपि न खल्वेवंप्रायाः क्रतुप्[3]रतिघातिनः
क इह न गुणैस्तं राजानं जनो बहु मन्यते ।
तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाकरोत् ॥ २८ ॥

---

इत्यर्थात् सिद्धम् । अत्र त्वामिति एत(?)तेनैकं पुनरुक्तम् ॥ २७ ॥ अतिशोभसे इति वक्तव्यमिति पृथक्कथनं प्रमाद इति कश्चित् । तन्न । 'अत्यन्तमति चैकान्तमत्यर्थम्' इति शब्दमाला । यां स्वातन्त्र्येणाभिधानादतीति पृथक् प्रयोगो युज्यते । हिकार उच्चारणप्रौढ्ये । **नाम** प्रसिद्धौ । **रथमल**मिति ध्वनिः । **उपकरणेषु** रथादिषु । 'साधनमुपकरणं सामग्री च परिच्छदः' इति रत्नाकरः । अरण्ये सीदन्तीति **अरण्यसदः** । **चर्या** पदस्थितिः । अनुपदं वयमपीत्यात्मनैवात्मा स्तूयत इति सङ्कोचवशात् सलज्जमिवेत्युक्तम् ॥ **यदि च वयमपीति** ॥ २८ ॥ **वयमपि न खल्वेव**मिति काकुः । एवं सुजना एवेत्यर्थः । किं तत इत्याह–प्राय इति । **प्रायः** बहुधा । **क्रतुद्विषतां** असुरराक्षसानाम् । **अरिं** हन्तारम् । **तदपि** तथापि । 'सप्तलोकैकवीरस्य' इति तुरङ्गमरक्षिणां **व्याहारः** उक्तिः । **मे विकृतिं** विकारम् । **अकरोत् खलु** ॥ २८ ॥ 'तपःक्लेशसहो **दान्तः**' इत्यमरः । 'दमशीलो वादः इन्द्रियनिग्रहः' इति भग-

---

१ 'यदाचरितम्' न. २ 'यदि च वयमप्येवं°' न. ३ 'क्रतुद्विषतामरौ' न; 'क्रतुष्वपि मत्सराः' घ.

**चन्द्रकेतुः**—( सस्मितम् ) किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ।

**लवः**—अस्त्विहामर्षो माभूद्वा । एतत्तु पृच्छामि । दान्तं हि राजानं राघवं शृणुमः । स किल नात्मना दृप्यति नास्य प्रजा वा दृप्ता जायन्ते । तत्किं मनुष्यास्तस्य राक्षसीं वाचमुदीरयन्ति ।

**ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।**
**सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः[1] ॥ २९ ॥**

इति ह स्म तां निन्दन्ति । अथेतरामभिष्टुवन्ति ।

**कामं दुग्धे[2] विप्रकर्षत्यलक्ष्मीं**
**कीर्तिं सूते दुष्कृतं[3] या हिनस्ति ।**
**तां चाप्येतां[4] मातरं मङ्गलानां**
**धेनुं धीराः सूनृतां वाचमाहुः ॥ ३० ॥**

**सुमन्त्रः**—परिपूर्तस्वभावोऽयं[5] बत कुमारः प्राचेतसान्तेवासी । वदत्ययमभिसम्पन्नमार्षेण[6] संस्कारेण ।

**लवः**—यत्पुनश्चन्द्रकेतो वदसि किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति तत्पृच्छामि किं व्यवस्थितविषयः क्षत्रधर्म इति ।

**सुमन्त्रः**—नैव खलु जानासि देवमैक्ष्वाकं येनैवं वदसि । तद्विरमातिप्रसङ्गात् ।

---

वान् **बोधायनः** । अत्र अश्वरक्षकसेनायाम् । **तस्य** रामस्य **मनुष्याः** ॥ **ऋषयो राक्षसीमिति** ॥ २९ ॥ **सा** वाक् **योनिः** कारणम् । **लोकस्य** वक्तुर्जनस्य । 'अलक्ष्मीस्तु निर्ऋतिः' इत्यमरः ॥ २९ ॥ **इति ह स्म** इति कथनमार्षः संप्रदायः । 'तु हि च स्म ह वै पूर्तौ' इति केशवः । अत एव 'शरभङ्गं ददर्श ह' इति **प्राचेतसः** ॥ **कामं दुग्धे** इति ॥ ३० ॥ **कामं** मनोरथम् । **दुग्धे** दोग्धि **विप्रकर्षति** दूरयति । निस्स्पृहन्ति (?) निश्शेष इति । **सूनृतां** प्रियाम् **वाचं धेनुं** कामधेनुम् । **आहुः** वदन्ति ॥ ३० ॥ **अभिसंपन्नं** सुसत्कृतं यथा तथा । **संस्कारेण** संप्रदायेन । ध्वनिश्च । इति

---

१ 'निष्कृतिः' **न.** २ 'कामान्दुग्धे' **क–घ–व.** ३ 'दृहृदो निष्प्रलान्ति' **न.** ४ 'शुद्धां शान्तां' **न.** ५ 'परिभूतोऽयं' **न.** ६ 'अभ्युपपन्नामर्षेण' **न;** 'अभ्युपपन्नम्' **क.**

सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने न[1] हि निर्बन्धमर्हसि ॥ ३१ ॥

लवः—(सहासम् ।) आर्य जामदग्न्यस्य दमनः स राजेति कोऽयमुच्चैर्वादः ।

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां
बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ॥ ३२ ॥

चन्द्रकेतुः—(सोन्मादमिव ।) आर्य सुमन्त्र कृतमुत्तरोत्तरेण ।

कोऽप्येष संप्रति नवः पुरुषावतारो
[2]वीरो न यस्य भगवान्भृगुनन्दनोऽपि ।
पर्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितान्यपि यो न वेद ॥ ३३ ॥

लवः—को हि रघुपतेश्चरितं महिमानं च न जानाति । यदि नाम किंचिदस्ति वक्तव्यम् । अथवा शान्तम् ।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं[3] वर्ण्यते
सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो[4] लोके महान्तो हि ते ।
यानि त्रीण्यपराङ्मुखान्यपि[5] पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३४ ॥

---

यद्वदसि ॥ **सैनिकानां प्रमाथेने**ति ॥ ३१ ॥ **दमने** विग्रहीतरि रामभद्रे तु विषये **निर्बन्धं कर्तुम्** ॥ ३१ ॥ सिद्धं ह्येतदिति ॥ ३२ ॥ 'वीर्यं बले प्रभावे च' इत्यमरः । ध्वनिश्च ॥ ३२ ॥ **उन्मादः** चित्तविभ्रमः । **कोऽप्येष संप्रती**ति ॥ ३३ ॥ **यस्य** लवस्य **भृगुनन्दनोऽपि वीरो न** । **पर्याप्तं** यथेप्सितं **सप्तभुवनेभ्यः अभयदक्षिणा** येभ्यः । **पुण्यानि** पूतानि रम्याणि च **तातः** रामः तस्य **चरितानि** । **यः** लवः ॥ ३३ ॥ **यदिः** संभावनायाम् ॥ **वृद्धास्ते** इति ॥ ३४ ॥ **ते** रामपादाः वन्द्याः इत्यर्थः । तर्के । **वर्तते** चरितमिति शेषः । दूषणमित्याशयः । **सुन्दस्त्री** ताटका । **हि** प्रसिद्धौ । स्त्रीवधकृदितिभावः । **यानि त्रीणि पदानि** पदक्षेपणानि । कुतः विमुखं (पि मुखं?) मुखं मार्गः येषां तानि **कुतोमुखान्यपि आसन्** । **तत्र** तेषु पदेषु । **जनोऽभिज्ञः** पश्चान्निवृत्त इति भावः । अत एव 'अपासर्पद्धनुर्मात्रम्' इति **रामायणे** । अथवा **इन्द्रसूनुनिधने** वालिसंहारे, **यत् कौशलं तत्र** तस्मिन् कौशलेऽपि । जनोऽ-

---

१ 'नातिनिर्वक्तुमर्हसि' ब–घ. २ 'श्लाघ्यः' ब. ३ 'हुं वर्तते' न. ४ 'दमनेऽप्यखण्डयशसः' घ–ब. ५ 'अकुतोभयान्यपि' घ; 'अकुतोमुखानि' न.

**चन्द्रकेतुः**—आः, तातापवाद[1]भिन्नमर्याद, अति हि नाम प्रगल्भसे ।

**लवः**—अये मय्येव भ्रुकुटीमु[2]खः संवृत्तः ।

**सुमन्त्रः**—स्फुरितमनयोः क्रोधेन । तथा हि ।

**चू[3]डामण्डलबन्धनं तरलयत्याकूतजो वेपथुः**
**किंचित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः ।**
**धत्ते कान्ति[4]मकाण्डताण्डवितयोर्भङ्गेन वक्रं भ्रुवो-**
**श्चन्द्रस्योत्कटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥३५॥**

**कुमारौ**—तदितो विमर्दक्षमां भूमिमवतरावः ।

( इति निष्क्रान्ताः सर्वे । )

**पञ्चमोऽङ्कः ।**

---

भिज्ञः । वञ्चनया वालिनं संजहारेति भावः । तत्रेत्यस्य एकत्र सन्निवेशः अन्यत्रानुषङ्गः । सुन्दस्त्रीति कन्नडेषु ध्वनिः ॥ ३४ ॥ इति एवम् । भ्रुकुटीयुक्तं मुखं यस्य सः **भ्रुकुटीमुखः** ॥ **क्रोधेनोद्धतेति** ॥ ३५ ॥ आवेशेन आग्रहेण **उद्धतं** यथा तथा **धूतः** चलितः **कुन्तलभरः** यस्मिन् । **वक्रं भ्रुवोर्भङ्गेन** कौटिल्येन । **उत्कटं** मत्तं **लाञ्छनं** हरिणो यस्य तस्य **चन्द्रस्य** । **उद्भ्रान्तः** संभ्रान्तः **भृङ्गः** यस्मिन् । तस्य **कमलस्य च कान्तिं धत्ते** इत्यनेन वक्रं चन्द्रकमलबिम्बाकृतिधारीत्येव कवेस्तात्पर्यम् । न तु पाण्डिमा रक्तिमा वा विवक्षितः । अत एव 'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखम्' इति **बिल्हणः** ॥ ३५ ॥ **विमर्दक्षमां** युद्धयोग्याम् । इति दिक् ॥

॥ इति महाराजपद*...घनश्यामपण्डितविरचिते उत्तररामचरितसंजीवनाख्यटिप्पणे पञ्चमोऽङ्कः समाप्तः ॥

**॥ इति पञ्चमोऽङ्कः ॥**

---

१ 'तातापवादिन्' **व.** २ 'धरः' **क–घ–च.** ३ 'क्रोधेनोद्धतधूतकुन्तलभरः सर्वाङ्गजो' **न–टी.** ४ 'कान्तिमिदं च वक्रमनयोर्भङ्गेन भिन्नभ्रुवोः' **न.**

* प्रथमाङ्कटीकासमाप्तौ टीकाकृता यदात्मवृत्तं कथितं तदत्राप्यनुसन्धेयम्.

## षष्ठोङ्कः।

( ततः प्रविशति विमानेनोज्ज्वलं विद्याधरमिथुनम्। )

**विद्याधरः**—अहो नु खल्वनयोर्विकर्तनकुलकुमारयोरकाण्डकलहप्रचण्डयोरुद्द्योतितक्षत्र[1]लक्ष्मीकयोरत्यद्भुतोद्भ्रान्तदेवासुराणि विक्रान्तचरितानि[2]। तथाहि प्रिये पश्य पश्य।

**रणत्करणझञ्झणत्क्वणित[3]किङ्किणीकं धनु-**
**र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम्।**
**वितत्य किरतोः शरानविरतं[4] पुनः शूरयो-**
**र्विचित्रमभिवर्तते[5] भुवनभीममायोधनम्॥ १॥**

**जृम्भितं[6] च विचित्राय मङ्गलाय द्वयोरपि।**
**स्तनयित्नोरिवामन्द[7]दुन्दुभेर्दुन्दुमायितम्॥ २॥**

तत्प्रवर्ततामनयोः प्रवीरयोरनवरतमविरलमिलित[8]विकचकनककमलकमनीयसंहतिरमरतरुतरुणमणिमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः।

---

अथ रामकुशलवचन्द्रकेतूनां संलापं वर्णयिष्यन् कविः 'रतोपयामयुद्धादि न साक्षादीरये यदि हि ( ? ) इति नाटकलक्षणस्यावश्यकतया विद्याधरमिथुनमुखानुवादेन पञ्चमाङ्कावसानोपक्षिप्तं चन्द्रकेतुलवशस्त्राशस्त्रिसमरघट्टमुट्टङ्कयति—**तत** इति॥ **विक्रान्तैः** शौर्यस्य॥ **रणत्करणझञ्झणे**ति॥ १॥ **रणत्करणेन** शब्दानुकरणेन सह **झञ्झणन्त्यः** दीप्यमानाः। **क्वणित**युक्ताः **किङ्किण्यो** यस्मिन्। **ध्वनद्गुरुगुणया अटन्या** कोट्या **कृतः** दारुणकलकलः यस्मिन्। **धनुः** कर्म। **वितत्य** प्रसार्य कोटिद्वयकर्षणादुत्तरक्षणं इति भावः। **अविरतं** अनिशं। **मुहुः** असकृत्। **अभिवर्तते** समन्ताद्वर्तते॥ १॥ **जृम्भित**मिति॥ २॥ 'विचित्रं तु विविधेऽपि च विस्मये' इति हलायुधः। **द्वयोः मङ्गलाय** शुभाय शकुनाय च। **स्तनयित्नोः** मेघस्येव। **अमन्दं** महत्। **दुन्दुमायितं** शब्दानुकारः कर्तृ। **विजृम्भितं** आविर्भूतमित्यर्थः॥ २॥ **अनवरतं** सन्ततम्। **अविरलं** सान्द्रं यथा तथा। **मिलिता कमलानां** कमनीया **संहतिः** सङ्घः यस्मिन्। **निकराणां** समूहानाम्। **मकरन्दैः रम्यश्चासौ पुष्पनिपातः** कर्तृपदमेतत्। निपात इति ध्वनिः। तस्मात्

---

१ 'क्षात्र' ब–घ. २ 'विलसितानि' न; 'विचरणानि' घ. ३ 'झणज्झणितकङ्कण' क–ब–घ. ४ 'अविरतस्फुरच्चूडयोः' क–घ–ब. ५ 'अभिवर्धते' ब–घ. ६ 'विजृम्भितं च दिव्यस' क–घ–ब. ७ 'अमन्दं' क–घ–ब. ८ 'ललित' क–घ–ब.

**विद्याधरी**—ता किं ति उण अआण्डविप्फुरिदतडिच्छडाकडारं विअ अम्बरं झत्ति संवुत्तम् । (क)

**विद्याधरः**—तत्किं नु खल्वद्य

त्वष्टृयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः ।
पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ३ ॥

आं ज्ञातम् । जातक्षोभेण चन्द्रकेतुना प्रयुक्तमप्रतिरूपमस्त्रमाग्नेयम् । यस्यायमग्निच्छटासंपातः । संप्रति हि ।

अवदग्धकर्बुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः ।
दहति ध्वजांशुकपटावलीमिमां
नवकिंशुकद्युतिसविभ्रमः शिखी ॥ ४ ॥

---

(क) तत्किमिति पुनरकाण्डविस्फुरिततडिच्छटाकडारमिवाम्बरं झटिति संवृत्तम् ।

---

किमिति आकाशं ताण्डवितोद्दण्डतरलतटिच्छटाकडारमिव झटिति संवृत्तम् । 'उद्दण्ड' इति बहुलपाचको देशीयश्शब्दः । 'उद्दण्ड' इति **महाराष्ट्राः** । 'छटा परम्परा' इति जयः ॥ **त्वष्टृयन्त्रभ्रमीति** ॥ ३ ॥ **त्वष्टुः** विश्वकर्मणः । **यन्त्रं** शाणचक्रम् । तस्य **भ्रम्या** भ्रमणेन । **भ्रान्तस्य** मार्तण्डस्य । **ज्योतिषा उज्ज्वलः** । 'आकाशमस्त्रियाम्' इति रभसः । **नीललोहितस्य** रुद्रस्य । **चक्षुषः** नेत्ररूपाग्नेः । **पुटभेदः** । 'मृत्तिकापञ्जरे पुटः' इति त्रिकाण्डी । 'मूस' इति **महाराष्ट्राः** । तथा च गगनपुटे आग्नेयास्त्रमिदं मार्तण्डवत् रुद्रनेत्राग्निवद्दुस्सहमिति भावः ॥ ३ ॥ **अप्रतिरूपं** अप्रतिद्वन्द्वम् । अचिरात् झटिति **संपातः** पतनं यस्य ॥ **अवदग्धकर्बुरितेति** ॥ ४ ॥ **अवदग्धानि कर्बुरितानि** संजातचित्रवर्णानि **चामराणि** येषु । **किंशुकद्रुम** इव **सविभ्रमः** सविलासः । अनेनारण्यं सूचितम् । **शिखी** अग्निः ॥ ४ ॥ **खण्डाव-**

---

१ 'त्वाष्ट्र' क–घ–व. २ 'अप्रतिरूपम्' इति नास्ति क–घ–व–पुस्तकेषु. ३ 'अग्निवच्छर°' न. ४ 'वर्बरित' न. ५ 'दधति ध्वजांशुकपटाञ्चलेष्विमाः क्षणकुङ्कुमच्छुरणविभ्रमं शिखाः' क–घ–व.

आश्चर्यम्। प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुरवस्फुलिङ्गगुरुरुत्तालतुमुललेलिहानोज्ज्वलज्वालासंभारभैरवः भगवानुषर्बुधः। प्रचण्डश्चास्य सर्वतः सन्तापः। तत्प्रियामङ्गेनाच्छाद्य सुदूरमपसरामि। (तथा करोति।)

**विद्याधरी**—दिट्ठिआ एदेण विमलमुत्ताफलअसीअलसिणिद्धमसिणमंसलेण णाहदेहप्फंसेण आणन्दमंदमउलिदघुण्णन्तलोअणाए अद्धोदिदो एव्व अन्दरिदो मे संदावो। (क)

**विद्याधरः**—अयि किमत्र मया कृतम्। अथवा।

**अकिंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।**
**तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥ ५॥**

---

(क) दिष्ट्या एतेन विमलमुक्ताफलकशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेनानन्दमुकुलितघूर्णमानलोचनाया अर्धोदित एवान्तरितो मे सन्तापः।

---

**स्फोटैः** शकलकणैः। **पटुः**। **उत्तालाः** उद्धताः। **तुमुललोलाः** रणसंकुलतरलाः। **लेलिहानाः** ये **उज्ज्वलाः** तेषां **संभारैः भैरवः उषर्बुधः** अग्निः। 'उत्तालस्तूद्धते' इति, 'लेलिहानस्तु भक्षकः' इति। 'सामग्र्यामपि संभारः' इति धरणिहारावलीकेदाराः॥ **दिष्ट्या एतेन** विमलमुक्ताफलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेन आनन्दमन्दमुकुलितघूर्णमानलोचनाया अर्धोदित एवान्तरितो मे सन्तापः। **स्निग्धः** चिक्कणः। 'मनोहरे च मसृणम्' इत्यमरमाला। **मांसलो** निबिडः। आत्मनि **उदितः** जातः। **अन्तरितः** अन्तर्हित एव॥ **अकिञ्चिदपि कुर्वाण** इति॥५॥ किञ्चिन्न भवतीत्यकिञ्चित्। किञ्चिदपि न कुर्वाण इत्यर्थः। **यः प्रियो जनः। सौख्यैः यस्य दुःखान्यपोहति** दूरीकरोति, **तस्य** दुःखमुक्तस्य **तत्सौख्यैः** दुःखहर्ता जन इति भावः। **किमपि** अनिर्वाच्यम्। **द्रव्यं** गुणाश्रयो हि। द्रव्यविधेयत्वात्तदिति नपुंसकत्वेन निर्देशः॥ ५॥ कथमविरलविलोलवल्गद्विद्युल्लताविलासमण्डितैः मत्तमयूरकण्ठश्यामलैः अवस्तीर्यते नभोऽङ्गणं जलधरैः। वल्गनार्थको 'घोलन्त' शब्दो

---

१ 'पटुतर' घ–व; 'पटुरटत्' न. २ 'अंशुकेन' न. ३ 'अप्पोदिदो' (अल्पोदितः) क; एतन्नास्ति घ–व–पुस्तकयोः. ४ 'न किञ्चिदपि' क–न.

**विद्याधरी**—कहं अविरलविलोलघुण्णन्तविज्जुल्लदाविलासमंडिदेहिं मत्तमोरकण्ठसामलेहिं ओत्थरीअदि णभोङ्गणं जलहरेहिं। (क)

**विद्याधरः**—हन्त कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वेषः। कथमविरलप्रवृत्तवारिधारासहस्रसम्पातैः प्रशान्तमेव पावकास्त्रम्।

**विद्याधरी**—पिअं मे पिअं मे। (ख)

**विद्याधरः**—हन्त हन्त भोः सर्वमतिमात्रं दोषाय। यत्प्रलयवातावलिक्षोभगम्भीरगुलुगुलायमानमेघमेदुरान्धकारनीरन्ध्रनद्धमिव एकवारविश्वग्रसनविकटविकरालकालमुखकन्दरविवर्तमानमिव युगान्तयोगनिद्रानिरुद्धसर्वद्वारनारायणोदरनिविष्टमिव भूतजातं प्रवेपते। साधु चन्द्रकेतो साधु। स्थाने वायव्यमस्त्रमीरितम्। यतः।

**विद्याकल्पेन मरुता मेघानां भूयसामपि।**
**ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः॥ ६॥**

---

(क) कथमविरलविलोलघूर्णमानविद्युल्लताविलासमण्डितैर्मत्तमयूरकण्ठश्यामलैरवस्तीर्यते नभोङ्गणं जलधरैः।

(ख) प्रियं मे प्रियं मे।

---

देशीयः। 'घोळतो' इति **महाराष्ट्राः**॥ प्रियं मे प्रियं मे। **अतिमात्रं** अतिशय इत्यर्थः। **क्षोभेण गम्भीरं** यथा तथा प्रवसद्भिर्मेघैः। **नद्धं** संबद्धम्। प्रवासवाचको 'गलगल' शब्दो देशीयः। 'गळग्य' **महाराष्ट्राः**। 'सान्द्रस्निग्धस्तु मेदुरः' इत्यमरः। **एकवारं** सकृत्। **विकटः** कुटिलः। **कन्दरे विवर्तमानं** परिणममानम्। **निद्रया निरुद्धानि** आवृतानि **सर्वद्वाराणि** शरीरस्थनवद्वाराणि यस्य। **निविष्टं** प्रविष्टमिव यत् तद् **भूतजातं** प्राणिसमूहः **प्रवेपते** इति अन्वयो योज्यः॥ **विद्याकल्पेनेति** ॥ ६॥ **विद्यायाः** मोक्षसाधनीभूतवेदान्तस्य **कल्पेन** परिशीलनेन। 'कल्पो योगे च परिशीलने' इति धनञ्जयः। **ब्रह्मणि विवर्तानां** जगतां **प्रविलयः** ऐक्यमिव। **मरुता** वायुना **मेघानां क्वापि** प्रकरण इति शेषः। **प्रविलयः** प्रसारणम्।

---

१ 'गुमगुमायमान' घ; 'गुणगुणायमान' व. २ 'निबद्धम्' व–घ. ३ 'विपद्यते' न.

**विद्याधरी**—णाध को दाणिं एसो संभमुक्खित्तकरब्भमिदोत्तरिआञ्चलो दूरदो एव्व महुरसिणिद्धवअणपडिसिद्धजुद्धव्वावारो एदाणं कुमाराणं अन्दरे विमाणवरं ओदरावेदि । ( क )

**विद्याधरः**—( दृष्ट्वा ) एष शम्बूकवधात्प्रतिनिवृत्तो रघुपतिः ।

शान्तं[1] महापुरुषसङ्गदितं[2] निशम्य
तद्गौरवात्समुपसंहृतसंप्रहारः ।
शान्तो लवः प्रणत एव च चन्द्रकेतुः
कल्याणमस्तु सुतसङ्गमनेन[3] राज्ञः ॥ ७ ॥

तदितस्तावदेहि । ( इति निष्क्रान्तौ । )

मिश्रविष्कम्भः ।

---

( ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च । )

**रामः**—( पुष्पकादवतरन् । )

---

( क ) नाथ क इदानीमेष संभ्रमोत्क्षिप्तकरभ्रमितोत्तरीयाञ्चलो दूरत एव मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोरन्तरे विमानवरमवतारयति ।

---

कृतम् ॥ ६ ॥ नाथ क इदानीमेष संभ्रमोत्क्षिप्तोत्तरीयाञ्चलः दूरत एव मधुरस्निग्धवचनप्रतिषिद्धव्यापारः कुमारयोरन्तरे विमानोपरिचरो व्याहरति । वस्त्रधूननं निषेधव्यञ्जकं इति जगदनुभवसिद्धम् । **अन्तरे** मध्ये ध्वनिश्च ॥ **शान्तं महापुरुषेति** ॥ ७ ॥ **शान्तं** सौम्यम् । ध्वनिश्च । **महापुरुषस्य** रामस्य । **संगतकं** हृदयङ्गमम् । स्वार्थे कः इति कश्चित् । तन्न, 'शिरोऽम्बुवचनेषु कम्' इति केदारः । कृत्यासङ्गतमित्यस्य हृदयङ्गमवचनमित्यर्थ इति कथनस्यैवोचितत्वात् । **संप्रहारः** युद्धम् । शान्तो लव इति ध्वनिः । तुकारः पादपूरणं इति केचित् । चन्द्रकेतुस्त्वित्यन्ये । स चन्द्रकेतुरिति वा पाठः । **सुतयोः सङ्गमनेन** प्राप्त्या । सङ्गमने इति सप्तमी । लाभात्तु राज्ञ इति ध्वनिः ॥ ७ ॥ **मिश्रविष्कम्भ** इति 'उदात्तनीचपात्रोक्तौ मिश्रविष्कम्भः' इति लक्षणात् ।

---

१ 'शब्दं' व-घ. २ 'संविहितं' व-घ. ३ 'संमिलनेन' घ.

**दिनकरकुलचन्द्र चन्द्रकेतो**
**सरभसमेहि दृढं परिष्वजस्व**
**तुहिनशकलशीतलैस्तवाङ्गैः**
**शममुपयातु ममापि चित्तदाहः ॥ ८ ॥**

(उत्थाप्य सस्नेहास्रं परिष्वज्य।) अपि नाम कुशलं तव दिव्यास्त्रधरदेहस्य।

**चन्द्रकेतुः**—कुशलमत्यद्भुतक्रियस्य प्रियदर्शनस्य लवस्य लाभाभ्युदयेन। तद्विज्ञापयामि मामिव विशेषेण वा मत्तः स्निग्धेन चक्षुषा पश्यत्वमुं वीरमनरालसाहसं तातः।

**रामः**—(लवं निरूप्य।) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं वयस्यो वत्सस्य।

**त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः**
**क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोषस्य गुप्त्यै।**
**सामर्थ्यानामिव समुदयः सञ्चयो वा गुणाना-**
**माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ९ ॥**

**लवः**—(स्वगतम्।) अहो पुण्यानुभावदर्शनोऽयं महापुरुषः।

**आश्वासस्नेहभक्तीनामेकमायतनं महत्।**
**प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसुन्दरः ॥ १० ॥**

---

**दिनकरकुलेति** ॥ ८ ॥ 'श्रेष्ठार्थे चन्द्रहंसाद्याः' इति मेदिनी। **दाहः** तापः ॥ ८ ॥ **अनरालं** मञ्जु ॥ **त्रातुं लोकानिवेति** ॥ ९ ॥ **धर्मः क्षात्रो** यः धर्मः आचार एव **कोशः** अर्थौघः। **समुदयः संचयश्च** सङ्घः। ध्वनिश्च। **जगतः पुण्यनिर्माणानां** सुकृतविरचनानाम्। **राशिः** पुञ्जः ॥ ९ ॥ **पुण्यस्य अनुभावः** प्रभावः यस्मात् तादृशं **दर्शनं** आलोकनं यस्य। पुण्यानि पवित्ररम्याणि। अनुभावः सन्मतिनिश्चयः। दर्शनानि शास्त्राणि च यस्मिन्। 'अनुभावः प्रभावे च सतां च मतिनिश्चये' इत्यमरः॥ **आश्वास इवेति** ॥ १० ॥ **आश्वासस्नेहयोः** सान्त्वनप्रणययोः स्वनिष्ठयोरिति भावः। **भक्तीनां** परकर्तृकाणामिति भावः। एकं अद्वितीयम्। **आयतनं** स्थानम्। **प्रकृष्टस्य** आवश्यकस्य। **धर्मस्य** अश्वमेधादेः। 'यजेतावश्यकैर्मुख्यैः' इति स्मरणात्। **मूर्त्या सुन्दरः** मूर्तिः शरीरं सुन्दरं यस्येति वा। सौन्दर्येण मूर्त

---

१ 'महावीरप्रकाण्डम्' क-घ-व. २ 'आश्वास इव भक्तीनामेकम्' न; 'एकमालम्बनं' क-घ-च. ३ '०सञ्चरः' क-घ-व.

आश्चर्यम् ।

**विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-**
**स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।**
**झटित्यस्मिन्दृष्टे किमिव परवानस्मि यदि वा**
**महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ११ ॥**

**रामः**—तत्किमयमेकपद एव मे दुःखविश्रामं ददात्युपस्नेहयति च कुतोऽपि निमित्तादन्तरात्मानम् । अथवा स्नेहश्च निमित्तसव्यपेक्ष इति विप्रतिषिद्धमेतत् ।

**व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-**
**र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।**
**विकसति हि पतङ्गस्योदये पुण्डरीकं**
**द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १२ ॥**

---

इति भावः । प्रसादः अनुग्रह इव स्थितः इति शेषः । तथा चाश्वमेधस्यैव फलं राम इति भावः ॥ १० ॥ **विरोधो विश्रान्त** इति ॥ ११ ॥ सः प्रसिद्धः । **विश्रान्तः** विरतः वीरो **रसः निर्वृतिघनः** सुखसान्द्रस्सन् । **प्रसरति** व्याप्तो भवति । **तत्** परभयङ्करम् । **प्रह्वयति** न क्षयति **अस्मिन्** महापुरुषे । 'पराधीनः परवान्नाथवानपि' इत्यमरः । **यदि वा** अथवेत्यर्थः । 'यद्वोत यदि वा-थवा' इति विक्रमार्कः । **तीर्थानां** गुरूणामिव । **महतां** पूज्यानाम् । **महार्घः** उत्सवपूर्वकपूजाविधिरित्यर्थः । 'मह उत्सवे' इति, 'पूजाविधावर्घः' इति चामरः । **कोऽपि अतिशयो** हि ॥ ११ ॥ 'सहसा स्यादेकपदे' इति नन्दी । **दुःखाय विश्रामं** विरतिं अभावमिति यावत् । **कुतः** कस्मादपि । **निमित्तात्** कारणात् । **निमित्तेन सव्यपेक्षः** सापेक्ष इत्येतत् । **विप्रतिषिद्धं** विशेषेण निषिद्धमित्यर्थः ॥ तदेवोपपादयति ॥ **व्यतिषजति** इति ॥१२॥ **आन्तरः** अन्तःकरणात्मको हेतुः । **पदार्थान्** प्रतिरूपान् । **व्यतिषजति** व्यतिषक्तान् संबद्धान् करोतीत्यर्थः । 'व्यतिषजति संबध्नाति' इति श्रीनाथः । **'उपाधिस्तु निमित्ते च'** इति हेमचन्द्रः । तत्रोदाहरणमाह—**वीति** । **पतङ्गस्य** रवेः । **पुण्डरीकं** सिताम्भोजम् । **हिमरश्मौ** चन्द्रे । **उद्गते** उदिते सति । **चन्द्रकान्त**शिला । **द्रवति** स्रवतीति माठरः । तथा च अतिदूरे रवौ चन्द्रेऽप्युदिते यथा पुण्डरीकं विकसति चन्द्रकान्तश्च द्रवति । तथैव केनाप्यान्तरहेतुना

---

१ 'किमिति' न; 'किमपि' क.

**लवः**—चन्द्रकेतो क एते ।

**चन्द्रकेतुः**—प्रियवयस्य ननु तातपादाः ।

**लवः**—ममापि तर्हि धर्मतस्तथैव यतः प्रियवयस्य इति भवतोक्तम् । किं तु चत्वारः खलु भवतामेवंव्यपदेशभागिनस्तत्रभवन्तो रामायणकथापुरुषाः । तद्विशेषं ब्रूहि ।

**चन्द्रकेतुः**—ननु ज्येष्ठतातपादा इत्यवेहि ।

**लवः**—( सोल्लासम् । ) कथं रघुनाथ एव । दिष्ट्या सुप्रभातमद्य यदयं देवो दृष्टः । ( सविनयकौतुकं निर्वर्ण्य । ) तात प्राचेतसान्तेवासी लवोऽभिवादयते ।

**रामः**—आयुष्मन् एह्येहि । ( इति सस्नेहमालिङ्ग्य । ) अयि वत्स कृतं कृतमतिविनयेन । अनेकवारमपरिश्लथं परिष्वजस्व माम्[1] ।

**परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः ।**
**नन्दयति चन्द्रचन्दननिष्यन्दजडस्तव स्पर्शः ॥ १३ ॥**

**लवः**—( स्वगतम् । ) ईदृशो मां प्रत्यमीषामकारणस्नेहः । मया पुनरेभ्य एव द्रोग्धुमङ्गेनायुधपरिग्रहः[2] कृतः । ( प्रकाशम् । ) मृष्यन्त्विदानीं लवस्य बालिशतां तातपादाः ।

---

प्रीतयो वर्धन्ते । नात्र निमित्तापेक्षेति भावः । 'प्रतिस्नेहः प्रेम्णा च' इति **वामनः** ॥ १२ ॥ **क एत** इति पूजायां बहुत्वम् । **तथैव** तातपादा इत्यर्थः । **भवता**मिति पूजायाम् । कुशलवचन्द्रकेतुप्रमुखानामिति च व्यज्यते । भवत इति च पाठः । **एवं व्यपदेशः** तातेति व्यवहारः स एव **भागः** येषामस्ति ते भागिनः । **तत्रभवन्तः** पूज्याः । 'व्यपदेशस्तु व्यवहारः' इति संसारावर्तः । **तेषु विशेषम्** । **अपरिश्लथं** दृढम् ॥ **परिणतकठोरेति** ॥१३॥ **परिणतकठोरपुष्कराणां** विकचतरुणारविन्दानाम् । आन्तरपुटवत् **पीनः** स्थूलः । **जडः** शिशिरः ॥ **द्रोग्धुं** द्रोहं कर्तुम् । **बालिशतां** मौर्ख्यम् । वीरवदाचरितं

---

१ 'अङ्केन मामपरिश्लथं परिरम्भस्व' **न.** २ 'अभिद्रुग्धमङ्गेन यदायुधपरिग्रहं यावदध्यारूढो दुर्योगः' **क–घ–व.**

**रामः**—किमपराद्धं वत्सेन ।

**चन्द्रकेतुः**—अश्वानुयात्रिकेभ्यस्तातप्रतापाविष्करणमुपश्रुत्य वीरायितमनेन ।

**रामः**—नन्वयमलङ्कारः क्षत्रस्य ।

**न तेजस्तेजस्वी प्रसृतमपरेषां वि[1]षहते**
**स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।**
**मयूखैरश्रान्तं तपति यदि देवो दिनकरः**
**किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ १४ ॥**

**चन्द्रकेतुः**—अमर्षोऽप्यस्यैव शोभते महावीरस्य । पश्यन्तु हि तातपादाः प्रियवयस्यनि[2]र्युक्तजृम्भकास्त्रनिष्कम्पस्तम्भितानि सर्वतः सैन्यानि ।

**रामः**—वत्स लव संह्रियतामस्त्रम् । त्वमपि चन्द्रकेतो निर्व्यापारविलक्षितानि सान्त्वय बलानि ।

**लवः**—यथाज्ञापयति तातः । ( इति प्रणिधानं नाटयति । )

**चन्द्रकेतुः**—यथादिष्टम् । ( इति निष्क्रान्तः । )

**लवः**—तात प्रशान्तमस्त्रम् ।

**रामः**—वत्स सरहस्यप्रयो[3]गसंहाराण्यस्त्राण्याम्नायवन्ति ।

---

**वीरायितं** पौरुषं कृतमित्यर्थः । ध्वनिश्च ॥ **न तेजस्तेजस्वी**ति ॥ १४ ॥ **प्रसृतं** व्याप्तम् । **तस्य** तेजस्विनः । **प्रकृतिनियतत्वात्** जन्मसिद्धत्वात् । 'जन्मस्थितिस्वभावेषु प्रकृतिः' इति कपिलः । **अकृतकः** अकृत्रिमः । **मयूखैः** किरणैः । **अश्रान्तं** अनिशम् । **तपति यदि** तपति चेत् । **आग्नेयग्रावा** 'सूर्यकान्तस्त्वग्निमणिः' इति, '**निकृतः** स्याद्विप्रकृतः' इति चामरः । 'तस्मिन् विप्रकृताः काले' इति ईश्वरकृष्णमिश्रः ॥ १४ ॥ **निर्व्यापाराणि** व्यापाररहितानि । अत एव **विलक्षणा(क्षिता?)नि । बलानि** सैन्यानि । **प्रणिधानं** ध्यानम् । **सरहस्याः जृम्भकाणां प्रयोगोपसंहाराः** येषु तानि । **पाराय-**

---

१ 'प्रसहते' घ–व. २ '°नियुक्तेन जृम्भकास्त्रेण विक्रम्य स्तम्भितानि सर्वसैन्यानि' न. ३ '°संहारजृम्भकास्त्राणि दिष्ट्या वत्सस्यापि संपद्यन्ते' न.

ब्रह्मादयो ब्रह्महिताय तप्त्वा
परःसहस्राः शरदस्तपांसि ।
एतान्यपश्यन्गुरवः पुराणाः
स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

अथैतन्मन्त्रपारायणोपनिषदं भगवान्कृशाश्वः परःसहस्रसंवत्सरान्तेवासिने कौशिकाय प्रोवाच । स तु भगवान्मह्यमित्येष गुरुपूर्वानुक्रमः । कुमारस्य कुतः संप्रदाय इति पृच्छामि ।

लवः—स्वतःप्रकाशान्यावयोरस्त्राणि ।

रामः—( विचिन्त्य । ) किं न संभाव्यते । प्रकृष्टपुण्यपरिपाकोपादानः कोऽपि महिमा स्यात् । द्विवचनं तु कथम् ।

लवः—भ्रातरावावां यमौ ।

रामः—स तर्हि द्वितीयः कः ।

( नेपथ्ये । )

दाण्डायन

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे तथेति ।
अद्यास्तमेतु भुवनेष्वधिराजशब्दः
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥ १६ ॥

रामः—

अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव बद्धपुलकं करोति माम् ।

---

णस्य पठनस्य । उपनिषदं । वत्सरेभ्यः प्रभृति । अन्तेवासिने शिष्याय । गुरूणाम् । कुतः कस्मात् । पुण्यानां परिपाकः परिणाम एव उपादानं कारणं यस्य । उपादानमिति यमाविति च ध्वनी । तथा अतिशयेनेत्यर्थः ॥ आयुष्मतः किलेति ॥ १६ ॥ क्षत्रस्य रामस्येति भावः । शस्त्राण्येव शिखिनः अग्नयः ॥ १६ ॥ अथ कोऽयमिन्द्रेति ॥ १७ ॥ इन्द्रमणिवत्

---

१ 'परःसहस्रं' क—न. २ 'अथैतामस्त्रमन्त्रोपनिषदम्' न—क. ३ 'सहस्राधिकसंवत्सरपरिचर्यानिरतायान्ते० ' न. ४ 'पूर्वानुक्रमः' घ; 'क्रमः' व. ५ 'भुवनेषु च राज०' न.

नवनीलनीरधरधीरगर्जित-
क्षणबद्धकुड्मलकदम्बडम्बरम् ॥ १७ ॥

**लवः**—अयमसौ मम ज्यायानार्यः कुशो नाम भरताश्रमात्प्रतिनिवृत्तः ।

**रामः**—( सकौतुकम् । ) वत्स इत एवाह्वयैतमायुष्मन्तम् ।

**लवः**—एवम् । ( इति परिक्रामति । )

( ततः प्रविशति कुशः । )

**कुशः**—( साकूत[1]हर्षधैर्यं धनुरास्फालयन् । )

दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वतादा मनो-
र्दृप्तानां [2]दहनाय दीपितनिजक्षत्रप्रतापाग्निभिः ।
आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यं ममैतत्ततो
दी[3]प्तास्त्रस्फुरदुग्रदीधितिशिखानीराजितज्यं धनुः ॥ १८ ॥

( इति विकटं परिक्रामति । )

**रामः**—कोऽप्यस्मिन्क्षत्रियपोतके पौरुषातिरेकः ।

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।

---

**मेचका** नीला **छविः** कान्तिः यस्य । **धीरगर्जितक्षणे** गम्भीरस्तनितक्षणे । **बद्धकुड्मलः** यः **कदम्बो** नीपः तस्य **डम्बरः** आरभटी यस्य तम् । 'आरभटी चारभटीकाडम्बरश्च' इति रुद्रः ॥ १७ ॥ **दत्तेन्द्राभयेति** ॥ १८ ॥ **वैवस्वतान्मनोरा**गतैः जातागमैः । संभूतैरिति यावत् । **दृप्तानां** गर्वितदैत्यानाम् । **आदित्यैः** वैकर्तनैः । 'ऐक्ष्वादिजनकादित्यवैदेहरघवो दिशः' इत्यगस्त्यः । सावित्रैरिति च पाठः । **ततः** विस्तृतः । **विग्रहो यदि** युद्धं चेत् । **धनुः** । **दीप्तास्त्राण्येव स्फुरन्तौ उग्रदीधिती** अग्निसूर्यौ तयोः शिखाभिः ज्वालाभिः । **नीराजिता** कृतनीराजना । गुम्भि(म्फि?)तेति यावत् । **ज्या** मौर्वी यस्मिन् तादृशं शोभतामिति शेषः । धनुर्मे योजितास्त्रं भवत्विति भावः ॥ १८ ॥ **क्षत्रपोते** क्षत्रियडिम्भे । **पौरुषस्य** सामर्थ्यस्य । **अतिरेकः** आधिक्यम् ॥ **दृष्टिस्तृणीकृतेति** ॥ १९ ॥ **जगत्त्रये** सत्त्वाः । 'बलाधिके च सत्त्वोऽस्त्री' इत्यमरशेषः । **गतिः** गमनम् । पादार्पणक्रम इति यावत् । 'बाल्ययौवनम-

---

१ 'सक्रोधं कृतधैर्यं' **न.** २ 'दमनाय' **न.** ३ 'दीप्रास्त्र°' **न–घ–व.**

कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ १९ ॥

**लवः**—( उपसृत्य । ) जयत्वार्यः ।

**कुशः**—नन्वायुष्मन् किमियं वार्ता युद्धं युद्धमिति ।

**लवः**—यत्किंचिदेतत् । आर्यस्तु दृप्तभावमुत्सृज्य[1] विनयेन वर्तताम् ।

**कुशः**—किमर्थम् ।

**लवः**—यदत्र देवो रघुपतिस्तिष्ठति[2] । स च स्निह्यत्यावयोरुत्कण्ठते च युष्मत्संनिकर्षस्य ।

**कुशः**—( सतर्कम् । ) स रामायणकथानायको ब्रह्मकोषस्य गोपायिता ।

**लवः**—अथ किम् ।

**कुशः**—आशंसनीयपुण्यदर्शनः स महात्मा । किं तु कथमस्माभिरुपगन्तव्य इति न संप्रधारयामि ।

**लवः**—यथैव गुरुस्तथोपसदनेन ।

**कुशः**—कथं हि नामैतत् ।

**लवः**—अत्युदात्तः सुजनश्चन्द्रकेतुरौर्मिलेयः प्रियवयस्येति सख्येन मामुपतिष्ठते । तेन तत्सम्बन्धेन धर्मतात एवायं राजर्षिः ।

**कुशः**—संप्रत्यवचनीयो राजन्येऽपि प्रश्रयः ।

---

ध्यस्थं वयः कौमारकं विदुः ।' इति नन्दी । **गुरुतां** गुणत्वं गुणविशेषं महत्त्वं च । **गिरिवदि**ति कथनं गुरुतायां सार्वकालिकत्वसूचकम् । **उत** अथवा । 'औद्धत्यव्यञ्जको दर्पः ।' इति **गोवर्धनः** ॥ १९ ॥ **युद्ध**मित्यनादरे । **यत्किञ्चिदि**ति कथनं आत्मसदृशयुद्धाभावज्ञापकम् । **दृप्तभावं** दर्पम् । **आवयो**रिति सप्तमीद्विवचनम् । आतङ्कः । **ब्रह्माण** एव विप्राः त एव **कोशः** अर्थौघः । ' वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः ' इत्यमरः । 'गुरुस्तात उपाध्यायः' इति घटत इति शेषः । उदात्तः महान् । **और्मिलेयः** ऊर्मिलापुत्रः । 'सख्यं साप्तपदीनम्' इत्यमरः । **राजन्ये** क्षत्रियविषये । **प्रश्रयः** विनयः ।

---

१ 'उत्सृज्यार्योऽस्मिन् विनयेन' **व–घ**. २ 'रघुनन्दनः स्थितः । स रामायणकथानायको ब्रह्मकोशस्य गोप्ता' इति लववाक्यं **न**–पुस्तके.

( उभौ परिक्रामतः । )

**लवः**—पश्यत्वेनमार्यो महापुरुषमाकारानुभावगाम्भीर्यसम्भाव्यमानविविधलोकोत्तरसुचरितातिशयम् ।

**कुशः**—( निर्वर्ण्य । )

**अहो प्रासादिकं रूपमनुभावश्च पावनः ।**
**स्थाने रामायणकविर्देवीं वाचं व्यवीवृतत्[1] ॥ २० ॥**

( उपसृत्य ) तात प्राचेतसान्तेवासी कुशोऽभिवादयते ।

**रामः**—एह्येह्यायुष्मन् ।

**अमृताध्मातजीमूतस्निग्ध[2]संहननस्य ते ।**
**परिष्वङ्गाय[3] वात्सल्यादयमुत्कण्ठते जनः ॥ २१ ॥**

( परिष्वज्य । स्वगतम् । ) तत्किमपत्यमयं दारकः[4] ।

**अङ्गादङ्गात्सृत[5] इव निजस्नेहजो देहसारः**
**प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेकः[6] ।**
**सान्द्रानन्दक्षुभितहृदयप्रस्रवेनेव[7] सृष्टो**
**गात्रं[8] श्लेषे यदमृतरसस्रोतसा सिञ्चतीव ॥ २२ ॥**

---

...श्वासः इति रभसः । **आकारानुभावस्य** स्वरूपप्रभावस्य । **गाम्भीर्येण** ॥ **अहो प्रासादिकमिति** ॥ २० ॥ **प्रासादिकं** प्रसादनदानम् । 'माहात्म्ये चानुभावः' इति कपिलः । **वाल्मीकिः** रामायणमुद्दिश्य । **वाचं** सरस्वतीम् । **व्यवीवृतत्** वर्तयति स्मेत्यर्थः । परिणामयति स्मेति यावत् । **स्थाने** युक्तम् ॥ २० ॥ **अमृताध्मातेति** ॥ २१ ॥ **अमृतेन** सुधया । **आध्मातः** पूरितः यः **जीमूतः** मेघः । तस्येव **स्निग्धं संहननं** वपुः यस्य । 'मसृणश्यामयोः स्निग्धम्' इति शाश्वतः ॥ २१ ॥ **अङ्गादङ्गादिति** ॥ २२ ॥ 'अङ्गादङ्गादिति' श्रुतिः । ...यवः । **निजस्नेहजः** स्वप्रेमसंभवः । **सारो** बलः । **एको** मुख्यः **चेतनायाः धातुः** । 'कामोद्रेके चेतने' इति, 'धातुः स्यादश्मविकृतौ' इति शब्दमालाशब्दार्णवौ । **आनन्देन क्षुभितः** स्थानाद्भ्रष्टश्चासौ **हृदयप्रस्रवः** तेन सिक्तः । प्रस्रवः आर्द्रता । 'पाहता'(?) इति **महाराज्ञाः । स** तादृशः सभ... यावत् । **आश्लेषः** आलिङ्गनम् । **मम मे हिमश्च्योतं** तुहिननिर्गलनम् । **आ** समन्तात् **शंसतीव** । एतदालिङ्गनमतिसुखशीतलमिति भावः ॥२२॥ 'कठोर...

---

१ 'अवीवृतत्' क; 'अवीवृधत्' न. २ 'सिंह' घ. ३ 'परिष्वङ्गस्य' व. ४ 'तत्किमित्ययं च दारकः' न. ५ 'स्नुत' घ–व. ६ 'निजो देहजः स्नेहसारः' घ–व. ७ 'एव' क–घ. ८ 'प्रस्रवेणावसिक्तः' न. ९ 'गाढाश्लेषः स हि मम हिमच्योतमाशंसतीव' न.

**लवः**—तात ललाटंतपो[1] घर्मांशुः । तदत्र सालवृक्षच्छाये मुहूर्तमासनपरिग्रहं करोतु तातः ।

**रामः**—यदभिरुचितं वत्सस्य ।

( सर्वे परिक्रम्य यथोचितमुपविशन्ति । )

**रामः**—( स्वगतम् । )

**अहो प्रश्रययोगेऽपि गतिस्थित्यासनादयः ।**
**साम्राज्यशंसिनो भावाः कुशस्य च लवस्य च ॥ २३ ॥**

**वपुरवियुतसिद्धा[2] एव लक्ष्मीविलासाः**
**प्रतिकलकमनीयां[3] कान्तिमुद्भेदयन्ति[4] ।**
**अमलिनमिव चन्द्रं[5] रश्मयः स्वे[6] यथा वा**
**विकसितमरविन्दं[7] बिन्दवो माकरन्दाः ॥ २४ ॥**

भूयिष्ठां च रघुकुलकुमारच्छायामनयोः[8] पश्यामि ।

---

र्ध्वं दृष्टो रविः करैः । यदा ललाटं तपति स्याल्ललाटन्तपस्तदा ॥' इत्यमरशेषः । ' भूर्जस्तु सरलस्सालः' इति **धन्वन्तरिः । आसनपरिग्रहं** आसनं गृहाण । ध्वनिश्च ॥ **अहो प्रश्रययोगेऽपी**ति ॥ २३ ॥ **प्रश्रययोगे** अनन्यकर्तृकविनययोगेऽपि । स्वस्यैवोपचारकतादशायामपीति भावः । 'योगस्सन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । **स्थितिः** अवस्थानम् । **आसनं** उपवेशनम् । **आदि**शब्देन भाषणादिकं गृह्यते । **भावाः** चेष्टाः लक्षणानि च । 'भावस्सत्तास्वभावाभि...... लक्षणे' इति कपिलः ॥ २३ ॥ भङ्ग्यन्तरेणाह ॥ **वपुरवियुतसिद्धे**ति ॥ २४ ॥ **वपुषा अवियुताः** अवियुक्ताः सन्तः । **सिद्धाः** सहजसिद्धाः इति यावत् । 'काष्ठा त्रिंशत्तु ताः **कलाः**' इति **हरदत्तः । उद्भेदयन्ति** प्रकाशयन्ति । **स्वे** आत्मीयाः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः । **माकरन्दाः** मकरन्दसंबन्धिनः । **यथा वे**त्युपमानपदम् । 'यथेव वा व यद्वच्च यथा वा' इति केदारः ॥२४॥ 'भूयिष्ठस्थितं' इत्यमरः । रघुकुलस्यैव कुमारमिति

---

१ 'ललाटंतपस्तपति' **न.** २ 'अविहित' **क–घ–व.** ३ 'प्रतिजनकमनीयं' **व–घ;** 'कमनीयं' **क.** ४ 'कान्तिमत्केतयन्ति' **क–घ–व.** ५ 'रत्नं' **क–घ–व.** ६ 'ते मनोज्ञाः' **क–घ–व.** ७ 'विकसितमिव पद्मं' **क–घ–व.** ८ 'भूयिष्ठं च रघुकुलकौमारमनयोः' **न.**

कठोरपारावतकण्ठमेचकं
वपुर्वृषस्कन्धसुबन्धुरांसकम्[1] ।
प्रसन्नसिंहस्तिमितं च वीक्षितं
ध्वनिश्च मङ्गल्यमृदङ्गमांसलः ॥ २५ ॥

( निपुणं निरूप्य । ) अये न केवलमसत्संवादिन्याकृतिः[2] ।

अपि जनकसुतायास्तच्च तच्चानुरूपं
स्फुटमिह शिशुयुग्मे नैपुणोन्नेयमस्ति ।
ननु पुनरिव तन्मे गोचरीभूतमक्ष्णो-
रभिनवशतपत्रश्रीमदास्यं प्रियायाः ॥ २६ ॥

शुक्लाच्छदन्तच्छविसुन्दरेयं[3]
सैवोष्ठमुद्रा स च कर्णपाशः ।
नेत्रे पुनर्यद्यपि रक्तनीले
तथापि सौभाग्यगुणः स एव ॥ २७ ॥

( विचिन्त्य । ) तदेतत्प्राचेतसाध्युषितमरण्यं यत्र किल देवी परित्य-

---

विवेकः ॥ **कठोरपारावतेति** ॥ २५ ॥ **कठोरः** तरुण इति यावत् । **'मेचक**श्याम ........ मनोहरम्' इति विक्रमार्कः । **सु**कारः पादपूरकः । व्यर्थ इति बहवः । **वीक्षितं** अवलोकनं । **प्रसन्नं** च तत् **सिंहस्येव** स्तिमितं निश्चलमित्यर्थः । माङ्गल्य...सौ **मृदङ्गस्येव मांसलः** गम्भीर इति भावः । 'मङ्गले साधु मङ्गल्यं' इति नन्दी । 'सर्वमङ्गलमङ्गल्ये' इति **श्रीसूक्तभाष्ये** स्पष्टमेतत् ॥ २५ ॥ **अपि जनकसुताया** इति ॥ २६ ॥ **तत्तत्** चिह्नमिति थे...यमजागलस्तनोपमम् । **शिशू** इति प्रेमोपचारः बालावित्यर्थः । **अपि**स्सं-भावनायाम् । 'धन्यो मातृमुखस्सुतः' इति **मयसिद्धान्तमनुसरन्** । **मुखं** तु तदीय...ह—**नन्विति** । **अभिनवं** अध्यानं (?)। **श्रीः** शोभा । 'श्रीर्वेषादौ' इति विश्वः । तत् अनुपमानं **आस्यम्** । **ननु** निश्चये । **पुनरिव** शब्दाल-ङ्कारौ इति दयालवः ॥ २६ ॥ **शुक्लाच्छदन्तेति** ॥ २७ ॥ **शुक्ला**...... **अच्छा** निर्मला । **मुद्रा**... रेति जयः । **कर्ण** एव पाशः । कर्णस्येति **कल्प-लताकारः** । **रक्तेति** । 'नीलरक्तान्तलोचनः' इति महापुरुषलक्षणम् । वः । **स एव** प्रियासंबन्ध्येवेत्यर्थः ॥ २७ ॥ **तत्रापी**ति—अस्त्राणां स्वतःप्रकाशकेने-

---

१ 'बन्धुरांसयोः' न; 'स्कन्धमबन्धुरांशयोः' घ; 'अबन्धुरांशकम्' व. २ 'असदङ्गसंवादिनी' क-घ; 'असदृश°' न. ३ 'मुक्ताच्छ' क-घ-व.

क्ता । इयं चानयोराकृतिर्वयोऽनुभावश्च । यदपि स्वतःप्रकाशान्यस्त्राणीति[2] तत्र विमृशामि । अपि खलु तच्चित्रदर्शनप्रासङ्गिकमस्त्राभ्यनुज्ञानमुद्भूतं[3] स्यात् । न ह्यसांप्रदायिकान्यस्त्राणि पूर्वेषामप्यनुशुश्रुम । अयं[4] च संप्लवमानमात्मानं सुखातिशयो हृदयस्य मे विस्रम्भयते । यमाविति च भूयिष्ठमात्मसंवादः । भूयिष्ठं च मया द्विधा प्रतिपन्नो देव्या गर्भिणीभाव आसीत् । ( सास्रम् । )

**पुरा रूढे स्नेहे परिचयविकासादुपचिते**
**रहो विश्रब्धाया अपि सहजलज्जाजडदृशः ।**
**मयैवादौ ज्ञातः करतलपरामर्शकलया**
**द्विधा गर्भग्रन्थिस्तदनु दिवसैः कैरपि तया ॥ २८ ॥**

( रुदित्वा ) तत्किमेतौ पृच्छामि केनचिदुपायेन ।

**लवः**—तात किमेतत् ।

**बाष्पवर्षेण नीतं वो जगन्मङ्गलमाननम् ।**
**अवश्यायावसिक्तस्य पुण्डरीकस्य चारुताम् ॥ २९ ॥**

---

त्यर्थः । **प्रासङ्गिकं** प्रसङ्गभवम् । **शस्त्राभ्यनुज्ञान**मिति—सर्वथा एतानि त्वत्प्रसवमुपस्थास्यन्तीति प्रथमाङ्के चित्रपट्टिकादर्शनावसरे मयैवाभ्यनुज्ञा कृतेति भावः । **असांप्रदायिकानि** देशिकाभ्यनुज्ञातेतराणीत्यर्थः । **सुप्लवमानयोः** उल्लोलकल्लोलयोः । **विस्रम्भः** विश्वासः । आत्मना सह संवाद इत्यर्थः । जीवद्वयरूपे अपत्ये चिह्नं यस्मिन् ॥ **परां कोटिं स्नेहे** इति ॥ २८ ॥ 'उपचारः बहिस्नेहः प्रीतिरान्तरमुच्यते' इति **वस्तुनिर्णयः** । **सहजलज्जा** चासौ आ समन्ताद्वल्लभेतरविषय इति यावत् । **जडे** अचमत्कारिण्यौ **दृशौ** नेत्रे यस्याः । **कलया** चातुर्येण । 'ग्रन्थिर्मर्मणि' इति यादवः । **तया** सीतयेत्यर्थः ॥ २८ ॥ **केनचित्** अन्यावेद्येनेत्यर्थः ॥ **बाष्पवर्षेणे**ति ॥२९॥ **ते** तव । 'बाल्ये सुतानां...त्वङ्कारपूर्वा गिरः' इति **भोजचरिते** । **जगतां मङ्गलं** येन यस्माद्वा । **अवश्यायैः** हिमैः । **पुण्डरीकस्य** हिममिव त्वन्मुखस्य बाष्पधारापि चारुतेति भावः ।

---

१ 'वपुश्च' घ; 'आकृतिर्वत्सयोः' **व.** २ 'इति च । तत्रापि खलु तदपि चित्र°' **न.** ३ 'प्रबद्धं' **न.** ४ 'अयं विसयसंप्लव°' **न;** 'इत्थं च संप्लव°' **घ.** ५ 'सुखदुःखातिशयः' **न—क.** ६ 'विप्रलम्भः' **न.** ७ 'यमा...वादः' एतन्नास्ति **घ—व—**पुस्तकयोः. ८ 'परां कोटिं स्नेहे' **न.** ९ 'अधिगते' **न.** १० 'अवश्यायाम्बुसिक्तस्य' **घ.**

**कुशः**—अयि वत्स

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति ।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमेवं त्वं पृच्छस्यनधिगतरामायण इव ॥ ३० ॥

**रामः**—( स्वगतम् । ) अये तटस्थ[1] आलापः । कृतं प्रश्नेन । मुग्धहृदय कोऽयमाकस्मिकस्ते परिप्लवो[2] विकारः । एवं च निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽस्मि । भवतु तावदन्तरयामि । (प्रकाशम् ।) वत्सौ रामायणं रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वतीनिष्यन्दः प्रशस्तिरादित्यवंशस्य । तत्र कौतूहलेन यत्किंचिच्छ्रोतुमिच्छामि ।

**कुशः**—स कृत्स्न एव सन्दर्भोऽस्माभिरावृत्तः । स्मृतिप्रत्युपस्थितौ तावदिमौ बालचरितस्यान्त्येऽध्याये द्वौ श्लोकौ ।

---

अनेन अनितरसाधारणं सौन्दर्यं व्यज्यते । अत एव 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इत्यस्मद्व्याख्यात**शाकुन्तले** । पुण्डरीकेति कथनात् पाण्डिमा लक्ष्यते । तथा च—'या दशा विरहे स्त्रीणां सैव पुंसामपि' इति **काव्यचिन्तामणौ** ॥ २९ ॥ **विना सीतादेव्या** इति ॥ ३० ॥ **सीतैव देवी** तया । 'देवी कृताभिषेकायाम्' इत्यमरः । अरण्यमिव दुस्तरमित्यर्थः । यापि... सस्नेहं हः ( ? ) तावान्वा स्नेह इत्येवालम् । तथापि स्थितस्य गतिश्चिन्तनीयेति न्यायात् । **स्नः** प्रसिद्धः । **स्नेहः तावान्** अगण्य इत्यर्थः ॥ **अनवगतं रामायणं** येन । अत्र प्रथमो हिकारः पादपूरक इति कश्चित् । तन्न 'नहि नो नापीति' अमरसिंहेनाभिधानात् । द्वितीयस्तु प्रसिद्धवाचकः । कृत्स्नं किलेति भ्रान्तः पाठः । वतेति साधुः । अये इत्याश्चर्ये ॥ ३० ॥ **तटस्थः** कण्ठतः ( ? ) अनेन ज्ञातोऽस्मीति भावः । **आकस्मिकः** अकस्माद्भवः । **परिप्लवः** चञ्चलः । **विनिर्भिन्नं** भेदितं च तत् **हृदयं** तस्मिन् **आवेगः** संभ्रमः यस्य । शिशुजनेनाप्यनुकम्पितोऽस्मि । वृद्धेनेत्यत्र कैमुतिकन्यायभावः । **अन्तरयामि** छादयामि इत्यर्थः । **निष्यन्दः** गलनम् । **प्रशस्तिः** प्रशस्तता । **स्मृतिं प्रत्युपस्थितौ** स्मृतौ इति यावत् । **बालेति** बालकाण्डचरितस्य । **अन्त्ये** चरमे ।

---

१ 'तटस्थितः' क–घ–व. २ 'स्नेहपरिप्लवः' क; 'संप्लवाधिकारः' न.

**रामः**—उदीरयतं वत्सौ ।

**कुशः**—

**प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।**
**प्रियभावः स तु तया स्वगुणैरेव वर्धितः ॥ ३१ ॥**
**तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ।**
**हृदयं त्वेव जानाति प्रीतियोगं परस्परम् ॥ ३२ ॥**

**रामः**—कष्टमतिदारुणोयं हृदयमर्मोद्धातः । हा देवि एवं किल तदासीत् । अहो निरन्वयविपर्[1]यासविरसवृत्तयो विप्रलम्भपर्यवसायिनस्तापयन्ति संसारवृत्तान्ताः ।

**क्व तावानानन्दो निरतिशयविस्रम्भबहुलः**
**क्व[2] वाऽन्योन्यप्रेम क्व च नु गहनाः कौतुकरसाः ।**

---

'अध्यायस्सर्गः' इति केदारः। **वत्सा**विति द्विवचनसंबोधनम् ॥ **प्रिया तु सीते**ति ॥ ३१ ॥ गुणैः दयादाक्षिण्यादिभिः । रूपाणां सौन्दर्याणां गणैः राशिभिश्च । एवकारश्चकारार्थः । आनेकार्थ्यादव्ययानां यथाप्रकरणं बुधैर्ज्ञेयोऽर्थ इति **दण्डि**संमतेः । **प्रीतिः** सन्तोषः । **व्यवर्धत** तस्यामिति शेषः ॥ ३१ ॥ **तथैव राम** इति ॥ ३२ ॥ रामस्य सीता यथा **तथैवे**त्यर्थः । **हृदय**मित्येकवचनमहिम्ना उभयोर्हृदयमेकमेव, वपुषि परं द्वे इति भावः । **परस्परं प्रीतियोगं तु हृदयमेव जानाती**त्यन्वयः ॥ ३२ ॥ कर्मणः पूर्वानुभूतार्थस्य । 'उद्घात आरम्भः' इत्यमरः । **एवं** श्लोकद्वयानुरूपमित्यर्थः । निर्गतस्य अन्वयस्य **विपर्यासः** वैपरीत्यं यस्मात् । तादृक् **वृत्तं** चरित्रं यस्मिन् स चासौ **विप्रलम्भ**शृङ्गारः तस्य **स्मृतिः** स्मरणं । **तत्पर्यवसायिनः** स्मरणपर्यवसानवन्तः । **तावकाः** त्वदीयाः । **संप्रसादस्य** सम्यक् प्रसन्नतायाः । **वृत्तान्ताः** उदन्ताः इत्यर्थः । वंशोदितचरित्रशृङ्गारस्मरणपर्यवसायिनी जाता तव प्रसादवार्तेति भावः । 'विपर्यासो वैपरीत्ये' इति, 'अन्वयो वंशे' इति, 'वृत्तं चरित्रे' इति च, 'विप्रलम्भस्तु शृङ्गारे' इति मेदिन्यमरकपिलसंसारावर्ताः ॥ **क्व तावानानन्द** इति ॥३३॥ **विस्रम्भः** विश्वासः । वञ्चनाऽस्तीति भावः । चेतः मनः । यत्र यत्र यस्मिन् मनसीत्यर्थः । **तद्भे**दलेशरहितं प्रसिद्धं वा ।

---

१ 'विपर्यासविप्रलम्भस्मृतिपर्यवसायिनस्तावकाः संसारवृत्तान्ताः' **न.** २ 'क्व तेऽन्योन्यं यत्नाः' **घ–व.**

सुखे वा दुःखे वा क नु खलु तदैक्यं हृदययो-
स्तथाप्येष प्राणः स्फुरति न तु पापो विरमति ॥ ३३ ॥

भोः कष्टम् ।

प्रियागुणसहस्राणामेकोन्मीलनपेशलः ।
य एव दुःस्मरः कालस्तमेव स्मारिता वयम् ॥ ३४ ॥

यदा किंचित्किंचित्कृतपदमहोभिः कतिपयै-
स्तदीषद्विस्तारि स्तनमुकुलमासीन्मृगदृशः ।
वयःस्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारः स्फुरति हृदि मुग्धश्च वपुषि ॥ ३५ ॥

लवः—अयं च मन्दाकिनीचित्रकूटवनविहारे सीतादेवीमुद्दिश्य रघुपतेः श्लोकः—

त्वदर्थमिव विन्यस्तः शिलापट्टोऽयमग्रतः ।
यस्यायमभितः पुष्पैः प्रवृष्ट इव केसरः ॥ ३६ ॥

**हृदययोः** आवयोरिति शेषः । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरानुशासनात् प्राणा इति वक्तव्ये प्राणः इति कवेः प्रमाद इति केचित् । तन्न ॥ 'हृदि प्राणो' इति तस्यैवोक्तेः । **विरमति** विरतो भवति । एतेन तद्विरहव्यथायां अपानादयो विरताः, पुनराशानुबन्धात् प्राणमात्रं हृदि वर्तेत इति भावः ॥३३॥ **प्रियागुणे**ति ॥ ३४ ॥ **उन्मीलनं** उदयः । प्रकृते स्मरणमिति यावत् । **तं** कौमाराविर्भावरूपमेव कालमित्यर्थः ॥ ३४ ॥ **यदा किंचित्किंचिदि**ति ॥ ३५ ॥ **स्तनमुकुलं** कर्तृ । **यदा अहोभिः** दिवसैः । **कृतपदं** कृतस्थानं । चतुर्थपादः संहृदीति ( ? ) मृग्यम् । **तदा ईषत्** मनाक् । **विस्तारि** विस्तारशालि । **आसीत्** । यस्मिन् यत्र हृदि । **वयसः स्नेहे** प्रादुर्भावरूपे प्रेम्णि । **आकूतं** अभिप्रायः । तस्य **व्यतिकरेण** संबन्धेन । **घनः** सान्द्रः । **मदनः** । **प्रगल्भव्यापारः** प्रकटव्याप्तिः सन् । चरति । वपुषि च **मुग्धः** मनोज्ञः । चरतीत्यर्थः । तथा च मदनः वयसा सह हृदि वपुषि च प्रौढ आसीदिति भावः ॥ ३५ ॥ **त्वदर्थमिव विन्यस्त** इति ॥ ३६ ॥ 'चतुष्कोणा शिला शिलापट्टः' इति त्रिकाण्डी । 'चलोमण्डा' इति **महाराष्ट्राः** । **यस्य** शिलापट्टस्य । यमभितः इति भावः । 'यं चायमभितः' इति वा पाठः । '**केसरः** काञ्च-

१ 'क्रमोन्मीलनतत्परः' **न**; 'क्रमोन्मीलन°' **घ**. २ 'दुःसहः' **न**. ३ 'तदा' **क–घ–व**. ४ 'यदेतद्विस्तारि' **न**. ५ 'चित्रकूटवर्त्मनि मन्दाकिनीविहारे' **न**. ६ 'आयतः' **न**.

